सूत्रकारः कर्मसंग्रहो बीजरूपेण कुत्र तिष्ठतीत्यभिधत्ते। कर्मस्वरूपवृक्षो यदा संस्काररूपवटबीजस्वरूपेण परिणमते, तर्ह्यवस्थायामत्र कारण-स्वरूपस्य तत्कर्मणः त्रिविधं निवासस्थानं निर्धारितं चित्ताकाशं चिदाकाशं महाकाशं चेति। एकमनुष्यस्यान्तःकरणावच्छिन्नमाकाशं चित्ताकाश-नाम्ना, एकब्रह्माण्डसमष्टिभूतान्तःकरणावच्छिन्नाकाशं चिदाकाशनाम्ना, अर्थात् पिण्डस्याकाशं चित्ताकाशसंज्ञया ब्रह्माण्डस्याकाशं चिदाकाशनाम-धेयेन, अनन्तकोटिब्रह्माण्डावच्छिन्नाकाशं महाकाशाभिधानेनाभिधीयते। विज्ञानमिदमन्यप्रकारतोऽप्यवधेयम्, यथा—अधिभौतिकसृष्टिसम्बन्धयुक्तं चिदाकाशम् आध्यात्मिकसृष्टिसम्बन्धसम्बलितं महाकाशं चेति त्रिविधमा-काशं दैवीमीमांसाऽपरनामकमध्यमीमांसादर्शने सृष्टिप्रकरणे सविस्तरं वर्णितमास्ते ॥ ७६ ॥

त्रयाणामपि यथायोग्यसम्बन्धो निरूप्यते—

**त्रयाणां त्रिभिः सम्बन्धः ॥ ७७ ॥**

अत्र जन्मनि जन्मान्तरेषु वा जीवेन यावन्तो बीजस्वरूपस्व-संस्काराः संगृह्यन्ते ते प्रारब्ध-क्रियमाणासञ्चितसंज्ञया तिसृभिः श्रेणीभि-र्विभज्यन्ते। एकस्य जन्मनः पूर्वं यज्जन्मरूपिणो वृक्षस्यकृते यावन्ति संस्कारराशिबीजानि सन्ति तानि प्रारब्धसंज्ञयाऽभिधीयन्ते। जीवकृतानां नवीनकर्मणां संग्रहः क्रियमाणसंस्कार इत्युच्यते। जीवस्यानन्तकोटि-जन्मनामनन्तसंस्कारराशिबीजानि, येषामङ्कुरोत्पत्तिकालो नागतस्तानि संचितनाम्नाऽभिधीयन्ते। वस्तुतः प्रारब्धसंस्कारेण चित्ताकाशस्य क्रियमाणसंस्कारेण चिदाकाशस्य, सञ्चितसंस्कारेण च प्रधानसम्बन्धो महाकाशेन च निर्धारितो वर्तते। आकाशत्रयेऽपि परस्परं नास्ति भेदः। आद्यमाकाशद्वयम् यथा किल घटाकाशो मठाकाशो महाकाशः परस्पर-मभिन्नोऽप्युपाधिभेदतो भिद्यते, तथाऽत्रापि त्रिविधाकाशैकत्वेऽपि कर्मबीज-संस्काराणामेकत्वेऽपि संस्कारोत्पत्तिकालमनुसृत्य स्थानविभागो विहितः। त्रयोऽपि विभागा एकस्यैवाकाशस्य स्तरविशेषा अवगन्तव्याः। यथा वै

घटाकाशे मठाकाशे च महाकाशमेकमद्वितीयमेव परन्तु घटाकाशस्य स्तरो निम्नकोटिगः, मठाकाशस्य स्तरस्तस्मादीषदधिकः, महाकाशस्य च स्तरः सर्वव्यापकश्चेति, तदीयस्तरतारतम्येन विकीर्णसंस्कारसमूहाङ्कुरोत्पत्तिरूपायाः शक्तेश्चापि तारतम्यं विद्यते। अत एव त्रयाणामपि तेषां स्वतन्त्रसत्ता स्थिरीकृता, कर्मबीजविभागोऽपि त्रिधा विभक्तः ॥ ७७ ॥

तृतीयस्य स्वरूपमुच्यते—

## तृतीयं नित्यमेकनाद्यनन्तत्वात् ॥ ७८ ॥

तृतीयं महाकाशं आद्यन्तरहितत्वान् नित्यम् अद्वितीयं च। श्रीभगवतो विराड्देहेन सम्बन्धसत्त्वात् महाकाशम् आद्यन्तरहितमवधेयम्। यतः श्रीमद्भगवतो विराट्स्वरूपमप्याद्यन्तहीनं विद्यते। अतो महाकाशमपि विराड्रूपधारि श्रीपरमेश्वरसदृशमेकं नित्यस्वरूपतो विराजमानं च। यथैकस्मिन् ब्रह्माण्डेऽनेकानि पिण्डानि समुत्पद्यन्ते, विलीयन्ते च तथैव महाकाशसम्बन्धयुक्तपरमेश्वरविराड्वपुषि अनन्तकोटिब्रह्माण्डानि समुत्पद्यन्ते विलीयन्ते च। किन्तु श्रीभगवतो विराड्देहेन सम्बन्धसंयुक्त महाकाशं सदैवैकरूपतो विराजते ॥ ७८ ॥

अन्ययोर्द्वयोः स्वरूपं निगद्यते—

## अपरे सादिसान्ते ॥ ७९ ॥

पिण्डब्रह्माण्डयोः सम्बन्धयुक्ते चित्ताकाशचिदाकाशे सादिसान्ते विद्येते। प्रत्येकपिण्डमिव ब्रह्माण्डमपि प्रत्येकं सादि सान्तं च। अतः कारणादुभयसम्बन्धयुक्तमाकाशद्वयमवश्यमेव सादि सान्तमवधेयम्। यथा किल घटे नष्टे घटाकाशस्य मठे नष्टे च मठाकाशस्य नाशो जायते, यत्, उपाधिनाशत्वाद् द्वे एव महाकाशे सम्मिलिते बभूवतुस्तथैव सादिसान्तं चित्ताकाशं पिण्डस्थजीवे मुक्ते सति तदीयबन्धनकेन्द्रस्य नाशे जाते कर्मबीजसंस्काररक्षोपयोगि पिण्डाकाशं महाकाशे विलीयते, सादि सान्तं

चिदाकाशमपि ब्रह्माण्डस्य महाप्रलये तदाकाशमपि महाकाशे विलीयते। पिण्डब्रह्माण्डविनाशे कर्मबीजस्वरूपः संस्कारसमूहः कुत्र कथं वा गच्छतीति शङ्कां समाधत्ते। तथा हि मुक्तजीवपिण्डपञ्चभूतानि प्रकृतेर्यथायोग्यस्थानेषु विलीयन्ते तदीयचित्ताकाशं स्वकेन्द्रमपहाय चिदाकाशे विलयं प्रपद्यते। जीवकेन्द्रेण सम्बन्धयुक्तानि कर्मबीजानि ब्रह्माण्डकेन्द्रमाश्रित्य ब्रह्माण्डप्रकृतेराश्रयं कुर्वाणानि ब्रह्माण्डचिदाकाशे स्थानमधिगत्य तद्ब्रह्माण्डीयभाविन्यां फलोत्पत्तौ सहायकानि जायन्ते। एवमेव महाप्रलयगर्भे विलीने च ब्रह्माण्डे तद्ब्रह्माण्डपञ्चभूतसमूहो मतान्तरेण परमाणुरूपे वा स्वकीयकारणे वा विलीयते। परमिदं सुनिश्चितमेव यद् ब्रह्माण्डं तत् केनापि रूपेण मूलप्रकृतेरङ्गे प्रविश्य निजास्तित्वं विनाशयति। तदानीं तद्ब्रह्माण्डकर्मबीजधारकं चिदाकाशं नैजास्तित्वं विहाय महाकाशे विलयमुपढौकते। पुनर्ब्रह्माण्डे सृष्टिः "यथापूर्वमकल्पयत्" इति श्रौतविज्ञानमनुसृत्य बोभूयते। एतन्निश्चितत्वादिदमभ्युपगन्तव्यमेव यत् समष्टिकर्मबीजान्यपि नूनमेव कुत्राचित्तिष्ठन्ति। तदानीं महाप्रलये तानि यत्र स्थितिमङ्गीकुर्वते आकाशस्यानाद्यनन्तं सर्वव्यापकं तत्स्तरं महाकाशमुच्यते। एवमभ्युपगतौ नास्ति शङ्कावसरः। जीवेन साकं क्रियमाणसञ्चितसंस्कारयोः सम्बन्धस्तिष्ठति न वा? यदि तिष्ठति तर्हि जीवकेन्द्रे विद्यमाने कथं ते संस्कारास्तिष्ठन्ति, नष्टे च कामवस्थां प्राप्नुवन्तीत्यादिशङ्कासमाहितये निम्नर्निदिष्टविज्ञानमवधेयम्—

महाकाशे यथा चित्ताकाशचिदाकाशयोः समावेशः, सर्वव्यापके चाकाशे घटाकाशमठाकाशयोर्यथा समावेशस्तथैव चित्ताकाशे चिदाकाशे च चित्ताकाशचिदाकाशमहाकाशानां सम्बन्धो विद्यते। केवलं त्रीण्यपि स्तराणि स्वतन्त्राणि सन्ति। जीवचित्ताकाशेन सह प्रारब्धसंस्काराणां प्रधानसम्बन्धस्तिष्ठति। यतस्तेऽङ्कुरितदशायां तिष्ठन्ति। क्रियमाणसञ्चितसंस्कारा अपि गौणरूपेण निजस्थितिं लभन्त एव। यद्येवं न भवेत् तर्हि जीवेन क्रियमाणाः संस्काराः कथं स्मर्यन्ते। यतः स्मृतिसम्बन्धो जीवस्य

चित्ताकाशत एव सम्भवति, अतो जीवस्य क्रियमाणसंस्काराश्चिदाकाशस्तरं प्राप्नुवन्तः स्मृतिमाश्रित्य गौणरूपेण चित्ताकाशेनापि सम्बन्धसंयुक्ता भवन्ति, जन्मान्तरकाले समुपस्थिते ते क्रियमाणा संस्कारस्वरूपं विभ्रतः कर्मबीजावसरानुसारेण चित्ताकाशमाविश्य प्रारब्धरूपतां प्रपद्यन्ते, केचिच्च महाकाशस्तरे समुपगम्य सञ्चितस्वरूपं धारयन्ति। जीवकेन्द्रे मुक्तिदशायां नष्टे जाते गौणरूपेण सम्बन्धसंयुक्ताः क्रियमाणसंस्कारा वा सञ्चितसंस्कारा वा सर्वेऽपि मूलप्रकृतिमाश्रयन्तो महाकाशे स्थितिं लभन्ते। समयान्तरे च ब्रह्माण्डोत्पत्तिकारणतां भजन्ते। सञ्चितसंस्कारेणापि साकं गौणसम्बन्धश्चित्ताकाशेन तिष्ठति। यतो जीवस्य जन्मान्तरे ये प्रारब्धसंस्कारा उद्भवन्ति, ते आधिक्येन सञ्चितसंस्कारा-कृष्टा एव सम्भवन्तीति ॥ ७९ ॥

उभयनाशोपाय उपवर्ण्यते—

**संस्कारप्रणाशात्तन्नाशः ॥ ८० ॥**

संस्काराणां विनाशेन तन्नाशस्तयोश्चित्ताकाशचिदाकाशयोर्नाशोऽभ्युपगन्तव्यः। वस्तुतः समष्टिव्यष्टिरूपेण ब्रह्माण्डपिण्डसम्बन्धतो बोभूयमानफलोत्पत्तिबीजानां संग्रहश्चित्तचिदाकाशयोरेव सम्भवः। महाकाशं तु विश्रान्तेर्लयस्य वा स्थानम्। तयोर्नाशविषये समुत्पद्यमानशङ्कां समाधत्ते। तथाहि—कारणविशेषेण संस्काराणां पूर्णरूपेण नाशे जाते द्वयोराकाशयोरपि विनाशो भवितुमर्हति। कर्मराज्यस्याद्यन्तमवगन्तुं कर्मबीजानामाश्रयस्वरूपयोश्चित्तचिदाकाशयोरप्याद्यन्तावधारणीयौ। यथा ग्रन्थीनां बन्धने शिथिलीकरणे चैकविधैव हस्तक्रिया दृश्यते, किन्तु कया क्रियया ग्रन्थयो बध्यन्तेऽपरया च शिथिलीक्रियन्ते, तथैव कर्मणः सुकौशलरहितानुष्ठानतो जीवो बन्धनदशां प्राप्नोति, सुकौशलपूर्णप्रक्रियया च मुक्तिमधिगच्छति। अतो याभिः सुकौशलपूर्णप्रक्रियाभिः कर्मबीजसंस्काराणां नाशसम्भावना ताभिरेव द्वयोराकाशयोरपि विनाशः सम्भवः। तत्त्वज्ञानादिलब्ध्या वासनानाशत उपयोगिसाधनसमूहसाहाय्यबलेन

साधकः स्वसंस्कारहानिं सम्पादयति, तदानीं तेन मुक्तात्मना सम्बन्ध-युक्तयोर्द्वयोराकाशयोरपि विलयो जायते। कर्मोपासनाज्ञानकाण्डसाधनेन साधको यदाऽऽत्मज्ञानलाभेन निःसङ्गो निष्क्रियश्च जायते, तदानीमात्म-ज्ञानद्वारा वासनामयमनोनाशेन तत्पिण्डस्य जैवकेन्द्रं प्रणश्यति। जैवकेन्द्रे नाशमुपढौकमाने ततः समाकृष्टः क्रियमाणसञ्चितकर्मबीजसंस्कारसमूहः स्वत एव पृथग् भूत्वा सर्वविलयस्थानं प्रकृतिमाश्रयन्ति। एवं सति तज्जैवकेन्द्र-सम्बन्धसमुद्भूतं चित्तचिदाकाशस्वरूपमपि स्वत एव प्रणाशमुपपद्यते॥८०॥

विज्ञानमिदं पुनः स्पष्टयति—

## तदन्ते क्रियावसानात् ॥ ८१ ॥

संस्काराणामन्ते क्रियाणामवसानत्वात् प्रणाश उभयोश्चित्तचिदा-काशयोः स्वतः सिद्धः। यदि संस्काराः कर्मणां बीजभूतास्तर्हि तेषां विनाशेन कर्मविनाशः स्वतः एव सिध्यति। यदि कस्यचन वृक्षविशेषस्य बीजानि पृथिव्यां नाशमुपगच्छेयुः, तद्बीजानां संग्रहोपायो न स्यात् तर्हि संसारतः सर्वस्मादेव तज्जातिवृक्षहानिर्ध्रुवं भवीति। उदाहरणेनैतेनेदमवधेयम् यत् सुकौशलपूर्णसाधनद्वारा कर्मबीजसंस्कारा विनाशमुपगच्छेयुस्तदा कर्मणां प्रणाशोऽपि स्वतः सिद्ध एव॥ ८१॥

प्रसङ्गतो जीवसम्बन्धं निरूपयति—

## जीवः शरीरत्रयसम्बद्धः ॥ ८२ ॥

कर्माधीनो जीवस्त्रिभिः कारण-सूक्ष्म-स्थूलरूपैः शरीरैः सम्बन्धसंयुक्तो वेद्यः। जीवसृष्टिपूर्णावस्थायां प्रथमोत्पन्ना चिज्जडग्रन्थिरेव कारणशरीरम्। चतुर्विंशतितत्त्वेषु स्थूलपञ्चभूतातिरिक्ततत्त्वैः सूक्ष्मं शरीरमुत्पद्यते। शरीर-द्वयमिदं गमागमचक्रतो जन्मान्तरं प्राप्नोति। स्थूलं शरीरं तदुच्यते यन्मरणानन्तरमिहैव तिष्ठति। तच्च पञ्चीकृतमहाभूतैरुत्पद्यते। तत्र च पञ्चीकृततत्त्वानां तादृशी शृङ्खला तिष्ठति यादृशी लोकेऽत्र भवितुमुचिता। उदाहृत्येदमवधारणीयं यत् प्रेतलोकस्य स्थूलशरीरं वायुतत्त्वप्रधानम्,

स्वर्गलोकस्याग्नितत्त्वप्रधानं मृत्युलोकस्य च पृथ्वीतत्त्वप्रधानमित्यादि। शरीरविज्ञानमिदमन्यप्रकारेणाप्यवगन्तुं शक्यते—पञ्चकोषेषु आनन्दमयः कोषः कारणशरीरम् विज्ञानमयो मनोमयः प्राणमयश्च मिलित्वा सूक्ष्मशरीरम्, केवलमन्नमयः कोषश्च स्थूलशरीरमित्युच्यते। एतच्छरीरत्रयसम्बद्धो जीवः स्वकीयकर्मवेगेन सृष्टिप्रवाहे प्रवहति ॥ ८२ ॥

शरीरत्रयमिदं केन सम्बन्धयुक्तमित्युच्यते—

## त्रिभावसम्बद्धं तदतः ॥ ८३ ॥

अतः कारणात् त्रिविधमपि शरीरं तत् त्रिभावतः, अध्यात्माधिदैवाधिभूतरूपतः सम्बद्धं सम्बन्धयुक्तमवगन्तव्यम्। पूर्वोक्तानि त्रीण्यपि शरीराणि सृष्टेस्त्रिभिर्भावैः सम्बध्यन्ते। यथा हि सर्गस्य सर्वेऽपि पदार्थास्त्रिभावात्मकास्तथैव शरीरत्रयस्यापि त्रिभावात्मकत्वं स्वतः सिद्धम्। कारणशरीरमध्यात्मं, सूक्ष्मशरीरमधिदैवम्, स्थूलशरीरमधिभूतमिति त्रीणि शरीराणि विद्यन्ते। लोकान्तरं प्रतिष्ठमाने जीवे स्थूलशरीरं तत्रैव तिष्ठतीति हेतोर्भौमिकसम्बन्धविशेषत्वात्तस्याधिभौतिकता निश्चितैव सूक्ष्मशरीरस्याश्रयेण दैवकार्यं सम्पद्यतेऽतस्तस्याधिदैविकताऽपि युक्तियुक्तैव, सर्वेषां कारणत्वात् कारणशरीरस्याध्यात्मिकता निश्चप्रचैव ॥८३॥

कर्मप्रसङ्गतः सृष्टिविस्तारं वर्णयति—

## कर्मणा त्रिभावात्मिका सृष्टिः ॥ ८४ ॥

सृष्टिकारणेन कर्मणा त्रिभावात्मिका सृष्टिर्जायते। यतः सर्गस्य सर्वेऽपि पदार्थास्त्रिभावात्मका अतः सृष्टिरपि आध्यात्मिकी आधिदैविकी आधिभौतिकी चेति त्रिविधा विज्ञातव्या। पाञ्चभौतिकदृश्यप्रपञ्चस्य यत्रांशे चित्सत्तायाः प्राधान्यं ज्ञानप्रकाशयोः सम्बन्धश्चासावंशोऽध्यात्मिको विज्ञेयः। यत्र च क्रियाशीलता, यस्य द्वारेण वा देवाः स्वकर्त्तव्यतत्पराः, सृष्टेस्तदंशोऽधिदैवो वेदितव्यः, यत्र च स्थूलत्वजड़त्वाज्ञानात्वादिसम्बन्धः सोंऽशोऽधिभूतो मन्तव्यः ॥ ८४ ॥

प्रसङ्गादभिधीयते—

तेनातस्तदधिष्ठातृसम्वर्द्धनम् ॥ ८५ ॥

तेन कारणेन कर्मद्वारा तदधिष्ठातृणां संवर्द्धनं जायते। दृश्यप्रपञ्चकारणं कर्मैव, कर्मणैव सृष्टिस्थितिप्रलयाः सम्पद्यन्ते, अतः कर्मणा त्रिभावात्मकक्रमोन्नतिः कथं सम्भवेत्युच्यते। सृष्टेराध्यात्माधिदैवाधिभूतविभागानां चालकाः क्रमत ऋषिदेवपितरः सन्ति। सगुणब्रह्मस्वरूपस्य त्रिमूर्त्तः प्रतिनिधयः ऋषिदेवपितरः अध्यात्माधिदैवाधिभूतराज्यानां सञ्चालनं, संरक्षणं, संवर्द्धनं च कुर्वते। कर्मणैव त्रिविधश्रेणयो देवा इमे प्रसद्य साधकस्य त्रिविधां समुन्नतिं सम्पादयन्ति, संवर्धिताश्च ते ब्रह्माण्डस्य एवं स्वमधिकारमुन्नमयन्ति। एतन्नियममनुसृत्य कर्मप्रभावो प्रोक्ताधिदैवसम्बन्धात् जगदुन्नतेः कारणतां बिभर्त्ति ॥ ८५ ॥

केन केन कर्मणा कस्य कस्य तृप्तिर्भवतीत्युच्यते—

तत्सम्पृक्तकर्मणा तत्तुष्टिः ॥ ८६ ॥

स्वस्वसम्बन्धितेन कर्मणा तेषाम् ऋषिदेवपितृणां तृप्तिर्भवति। सृष्टिप्रपञ्चे ज्ञानविभागस्य चालका व्यवस्थापकाश्च ऋषयः, कर्मणस्तत्फलस्य च व्यवस्थापका देवाः, स्थूलशरीरादीनां विषयाणां व्यवस्थापकाश्च पितरो विद्यन्ते। अतो ज्ञानसम्बन्धीयकर्मणा ऋषयः, यज्ञादिद्वारा देवाः श्राद्धादिभिश्च पितरस्तृप्तिमनुभवन्ति। एवं तृप्तास्ते स्वं स्वमधिकारमनुसृत्य जगतः समुन्नतिं कुर्वते। वस्तुतस्तु ज्ञानविद्यादीनामभिवर्धनानि शारीरिकवाचनिकमानसिककार्याणि सर्वाण्यपि ऋषिसंवर्धनकराणि ज्ञेयानि; यज्ञयागसदाचारानुष्ठानादारभ्य वर्णाश्रमधर्मपरिपालनं यावद् यावानपि साधारणविशेषधर्मक्रियासिद्धांशो वर्त्तते, तेन देवाः संवृद्धिमुपयान्ति, तथैव पितृयज्ञ-पितृपूजन-श्राद्धतर्पणादिभिः पितरस्तृप्तिमावहन्ते। एतेषां त्रयाणां संवर्द्धनेन तत्तत्सम्बन्धीयभावराज्याधिकाराणां यथाक्रममुन्नतिर्निश्चिता। अतः साधका यथोचितकर्मानुष्ठानैः सर्वविधोन्नतिसम्पादने सामर्थ्यं बिभ्रति ॥ ८६ ॥

प्रासङ्गिकमभिधत्ते—

**प्रतिब्रह्माण्डं भिन्नास्ते ॥ ८७ ॥**

ते देवर्षिपितरः प्रतिब्रह्माण्डं भिन्ना भिन्ना विद्यन्ते। बहुविधपिण्ड-समन्वितचतुर्दशभुवनात्मकब्रह्माण्डस्य संरक्षणसञ्चालनसंवर्धनार्थं अनन्त-कोटिब्रह्माण्डं पृथक् पृथग् ऋषयो देवाः पितरश्च नियुक्ता विराजन्ते। वस्तुतः श्रेणीत्रयविभक्ता इमे देवाः सगुणब्रह्मत्रिमूर्त्तेः प्रतिनिधयः सन्ति। कर्मानुसारेणैव सुनिश्चितेषु त्रिष्वपि पदाधिकारेषु परिवर्त्तनमपि सम्भाव्यते। यथा एकस्य वनस्य देवता, पर्वतस्य देवता वा एकस्या नद्या देवता वा, यावत् तत्तद्वनपर्वतनदीनामस्तिता, तावदेव तत्तद्देवतानैमित्तिक-पदान्यपि तिष्ठन्ति। इन्द्रवरुणादिदेवपदानां नित्यत्वेऽपि तत्पदाधिष्ठातॄणा-मवनतिरुन्नतिर्वा सम्भाव्यते। पितॄणां सम्बन्धो मनुष्ययोनितः प्रारभ्यते। मृत्युलोकसम्बन्धयुक्ताः पितरः पितृलोके निवसन्ति, पितृलोको धर्मराज-यमस्याधिकारान्तर्गतः। देवलोकसम्बन्धिनः पितर ऊर्ध्वलोकेषु निव-सन्ति। ऋषयोऽनेकाधिकारवन्तः सन्ति, तेषामावासः सूक्ष्मलोकेषु विद्यते। मृत्युलोकेऽत्र ऋषीणां देवानामवतारा अपि सम्भवन्ति ॥ ८७ ॥

तदधिकारा निरूप्यन्ते—

**समष्टिव्यष्टयोः सम्बन्धस्तेषाम् ॥ ८८ ॥**

समष्टिभूते ब्रह्माण्डे व्यष्टिरूपे पिण्डे तेषां देवानां सम्बन्धो वर्त्तते, देवानां सम्बन्धः सर्वत्र विद्यत इत्यर्थः। सूक्ष्मं दैवं जगत् सर्वमूलम्। जड़कर्माणि चेतनैर्देवैश्चाल्यन्ते। चतुर्विधभूतसंघीयोद्भिज्जस्वेदजादि-योनयः, नदीपर्वतसमुद्राद्याः स्थूलसम्बन्धिन्यो विभूतयः, सुवर्णलोहादि-धातवः, स्थावरा जङ्गमा वा सृष्टिः, स्थूलो मृत्युलोकः, सूक्ष्मा देवलोकाः, व्यष्टिभूतं पिण्डं समष्टिभूतं ब्रह्माण्डम् सर्वत्रैव दैवशक्तिसम्बन्धो राजतेतराम्। कर्मशक्त्यैव सर्वे चाल्यन्ते सुरक्ष्यन्ते च। कर्मजड़रूपं जड़स्य परिचालनार्थं चेतनशक्तिसाहाय्यमवश्यमपेक्षितम्। अतः कर्मसत्ता-

सम्बन्धेन देवानामस्तित्वं समष्टौ व्यष्टौ वा दैवराजस्य परोक्षः साक्षाद् वा सम्बन्धो वर्त्तत एवेति ॥ ८८ ॥

कर्मप्रवाहगतयो वर्ण्यन्ते—

**द्विविधः कर्मप्रवाहोऽनुलोमविलोमभेदात् ॥ ८९ ॥**

अनुलोमविलोमभेदेन कर्मणां प्रवाहो गतिर्भागद्वयेन विभज्यते । द्वैतप्रपञ्चे या गतिरात्मनोऽभिमुखं गच्छति, साऽनुलोमा, या चात्माभिमुखतो नीचैरनात्मनोऽभिमुखं प्रचरति, सा प्रविलोमेत्युच्यते ॥ ८९ ॥

विज्ञानमेतत् स्पष्टयति—

**चेतनजडसम्बद्धौ ॥ ९० ॥**

तयोः किल स्थावरजङ्गमात्मकसर्गतो यथाक्रमसम्बन्धो वर्त्तते । एतयोरेकः कर्मप्रवाहः विलोमो जड़राज्यव्यापी, द्वितीयोऽनुलोमश्चेतनराज्यव्यापी बोध्यः । द्वयोरप्येतयोः कर्मप्रवाहयोर्यो जडाच्चैतन्यावच्छिन्नस्यात्मनोभिमुखं प्रवहति, स चेतनराज्यव्यापी प्रवाहोऽवगन्तव्यः । प्रवाहोऽयं जड़ात्परमाणोनिर्गत्य चिज्जड़ग्रन्थिमुत्पादयन् चतुरशीतिलक्षयोनिषु भ्रामयित्वा जीवं मानवपिण्डं प्रापयति, पुनश्च गतागतचक्रस्य नानावस्थासु भ्रामयन् परमात्मस्वरूपे स्वस्वरूपः पारावारे संगमयति । द्वितीयः प्रवाहश्चैतन्याज्जडाभिमुखं प्रवहन् यावदनात्मपदार्थसृष्टेः कारणतां प्राप्नोति । जीवतत्त्वातिरिक्ता सर्वाऽपि सृष्टिरेतत्प्रवाहान्तर्गता कदाचिज्जीवा अपि एतत्प्रवाहचक्रे पतित्वा दण्डार्हा भूत्वा नीचैरवतरन्ति । तथा किल यमलार्जुनयोर्वृक्षत्वप्राप्तिः, भरतस्य मुनेः मृगत्वाधिगमश्च । वस्तुतो जडेन जगतैव केवलमेतत्प्रवाहसम्बन्धो वर्तते । कर्मणश्चेतनप्रवाहे जीवस्य जीवत्वं दैवसाहाय्यं चेत्युभयमेव सहायकं भवति । द्वितीये जडप्रवाहे केवलं देवगणा एव साहाय्यकारिणो जायन्ते । ते देवगणा नदीपर्वतपञ्चभूतधातुरत्नादीनामधिष्ठातारोऽभिधीयन्ते । एवं हि कर्म प्रवाहद्वयप्रवाहितं भूत्वा विराड्रूपधारिणः परमात्मनो देहमभिसिञ्चति ॥ ९० ॥

भेदान्तरं व्याचष्टे—

## द्विविधः प्रथमः ॥ ९१ ॥

आद्यो जीवमयः प्रवाहो द्विविधः द्विप्रकारको विज्ञेयः । तस्य प्रवाहस्य शाखाद्वयमवगन्तव्यमित्यर्थः । नदीशाखा इयं परस्परं मिलित्वा सुविपुलैकनदीरूपेण परिणमते, यथा भागीरथी यमुनया मिलित्वा प्राबल्यं धारयति, तथैव जीवमयी धारा शाखाद्वयेन प्रवहन्त्यवसाने ह्येकीभूय ब्रह्मसमुद्रे विलयं गच्छति ॥ ९१ ॥

विज्ञानमिदं स्पष्टयति—

## प्राकृतिक एकः स्वतन्त्रोऽपरः ॥ ९२ ॥

एतच्छाखाद्वयरहस्यं सुस्पष्टं विधातुं महर्षिः सूत्रकारः सूत्रमिदमवतारयति । सहजकर्मसम्बन्धिनी प्राकृतिकी, जैवकर्मसम्बन्धिनी तद्भिन्ना स्वाधीना चेति जैवी धारा द्विधा विभज्यते । प्राकृतिकी जीवधारोद्भिज्जादेः प्रकटीभूय मनुष्यत्वप्राप्तौ पूर्णरूपेण गुप्ता सती जीवन्मुक्ते महात्मनि प्रकटीभवति । स्वाधीना किल धारा मानवीये दैवे च पिण्डे समुत्पद्य गमनागमनचक्रे परिभ्रमन्ती पुनर्मुक्तिभूमिमासाद्य सहजधारायां विलीयते । वस्तुतः शाखाद्वयमप्येतज्जीवमयस्य प्रवाहस्यैवाङ्गभूतमवगन्तव्यम् ॥ ९२ ॥

द्वयोः कार्यमभिधीयते—

## मुक्तिबन्धनिमित्ते ॥ ९३ ॥

द्वयोरेतयोः प्राकृतिकी जीवधारा विमुक्तेः स्वाधीना च बन्धनस्य हेतुतामापद्यते । जीवो यदा क्रमशः स्वीयपञ्चकोषपरिपूर्णतां सम्पादयन् मनुष्यत्वमुपैति, तदाऽसौ स्वस्य पिण्डस्याधीश्वरो जायते । तदानीमेष स्वाधीनतामासाद्य निजनूतनवासनाद्वारा नवीनानि कर्माणि सगृह्णन् आवागमनचक्रस्य स्थितिशीलतां सम्पादयति । स्वतन्त्रेयं जीवधारा बन्धनकारणभूता भवति । द्वितीया किल प्राकृतिकनियममनुसृत्य स्वाभाविकस्वरूपतः प्रवहन्ती गमागमचक्रं विनाश्य मुक्तेर्हेतुतामधिगच्छति । यथा

किल तरलतरङ्गा पतितपावनी गङ्गा वस्तुमात्रमेव निजप्रवाहे प्रवाहयन्ती महार्णवं प्रापयति। यदि किञ्चिद् वस्तु मध्येप्रवाहमावर्त्तग्रस्तं चेत्तदपि कालेनावर्त्तान्मोचयित्वा, पुनरपि सरलगत्या वारिधिं नेनीयते, तथैव प्राकृतिकी कर्मधारा प्रथमदशायामुद्भिज्जादितो क्रमोन्नतिं सम्पादयन्ती जीवान् मानवत्वमुपढौकते। तदनन्तरं चावागमनचक्रग्रस्तानपि जीवान् आवर्त्तसहस्रेभ्यो विमोच्य पुनस्तेभ्यो मुक्तिं वितरति॥ ९३॥

प्रथमप्रवाहस्य परिचयोऽत्र दीयते—

## आद्यो देवरक्षितः सारल्यात्॥ ९४॥

प्राकृतिकस्वतन्त्रयोर्द्वयोश्चेतनप्रवाहयोराद्यः प्राकृतिकः सारल्येन हेतुना देवैः संरक्षितः। दैवीमीमांसादर्शने सविस्तरमिदं सिद्धान्तितं यत् सहजपिण्डेषु प्रत्येकयोनिसंरक्षणशीलाः पृथक् पृथग्रूपेण देवाः समाम्नाताः। असौ प्राकृतिकः प्रवाहो गुप्तरूपेण जीवन्मुक्तमहापुरुषे तदीयवासनाजालस्य विलीयमानत्वात् स्वेच्छया न किमपि कार्यं सम्पद्यते, स च महात्मा दैवेच्छाप्रेरितो जगत्कल्याणकरकार्यकलापं विधत्ते, यथा किल स्वेदजाण्डजादिजीवाः स्वस्वप्रकृतिवशगा भोगेषु प्रवर्त्तन्ते, तथैवासावपि प्रारब्धसंस्कारवेगतः कर्मणि प्रवर्त्तमानो बोभवीति। यद्वदज्ञानवशतामुपेत्य मानवेतरजीवाः कर्माणि विदधते, तद्वदेव स्वरूपस्थिता जीवन्मुक्ता महात्मानो जैववासनाविरहिताः प्रारब्धवेगतः क्रियाकलापमनुतिष्ठन्ति। दशायामत्र स्वतः सिध्यति दैवसाहाय्यम्, यतो जडकर्मणां चालका देवा एव। अन्यच्च जीवन्मुक्ता ईशकोटिगा यदि जगत्कल्याणनिरताः क्रियमाणकर्मशीलवत् प्रतीयेरन् तर्हीदमवधेयं यत् ते दैवक्रियानिष्पत्तये भगवत्प्रेरिता एवं विदधत इति॥ ९४॥

द्वितीयस्य विशिष्टः परिचयो दीयते—

## विभूत्या रक्षितोऽपरो वैपरीत्यात्॥ ९५॥

अपरः स्वाधीनप्रवाहः प्राकृतिकप्रवाहविपरीतत्वात् विभूतिद्वारा सुरक्षितः सुव्यवस्थापितः। बहुशाखायुक्ते सकामे स्वाधीनप्रवाहे आनन्त्या-

ज्जैवकर्मणस्तत्संरक्षणे समपेक्षितं किल दैवसाहाय्यम्। यतोहि कर्मणः संचालकाः फलदातारोऽपि देवा एव; तथापि मानवपिण्डसमुद्भूतिभिः किल तदीया सदसद्व्यवस्था विधीयते। प्राकृतिकप्रवाहः खल्वेकरसः स्वाधीनस्तु न तथा। दुर्गासप्तशतीप्रतिपादितदेवीमाहात्म्यप्रोक्तरक्तबीजवद् विस्तृतिमापन्ना जैव्यो वासना बहुशाखा ह्यनन्ताश्च। कर्मणो जडत्वेन हेतुना प्रेरकत्वफलदातृत्वविचारे क्रियमाणे सर्वावस्थासु गौणरूपेण दैव्यां सहायतायां सत्यामपि स्वाधीनप्रवाहे विभूतिसाहाय्यस्य प्राधान्यम्। यतोहि जैववासनाप्राबल्यात् दैवसाहाय्यगौणत्वाच्च मानवलोकसमुत्पन्नविभूति-द्वारा तत्संरक्षणमत्यावश्यकम्। साधारणमानवेतरचतुर्विधभूतसङ्घेषु च प्रकृतिवेगेनैव कर्म सम्पद्यते। अतः प्राकृतिकप्रवाहे नितरां विद्यते सारल्यम्। किन्तु स्वाधीनप्रवाहे जीवः स्वातन्त्र्येण सदसत्संस्कारान् संगृह्णन् स्वकीयं वासनाजालं निरन्तरं प्रवर्धयते, अतः किलापरः प्रवाहो विपरीतो बहुशाखासंयुक्तोऽनन्तो जटिलश्च। मानवानां स्वाधीनताऽव-लम्बनेन दैवो दृष्टिर्गौणायते, तत्प्रवाहव्यवस्थापनं देवैरुपेक्ष्यते। सुतरां सर्व-शक्तिमतः सर्वहितनिरतस्य भगवतः श्रीपरमेशितुरीहया तदीयजगद्धितकरान् नियमानवलम्बमानैः राजाचार्यगुरुगृहपति-समाजपतिप्रभृतिभिर्विभूति-स्वरूपैः प्रवाहोऽयं संरक्ष्यते। अत एव मानवसमाजे राजानुशासन-शब्दानुशासन-योगानुशासनानां प्रयोजनीयता॥ ९५॥

विज्ञानमिदं सुस्पष्टयति—

## तद्देवापेक्ष्यं जडत्वात्॥ ९६॥

कर्मणो जडत्वाद्धेतोस्तद्दैवसापेक्ष्यमवधार्यम्। प्रथमं हि कर्मणो विभागत्रयम्, ततो जैवकर्मणः श्रेणीद्वयम्, तत्रापि दैवसाहाय्यस्य गौणत्वं मुख्यत्वं च विचारयतो जिज्ञासमानस्य हृदयस्थां शङ्कां समाधातुं पूज्य-चरणो महर्षिः सूत्रकृदभिधत्ते—कुत्रचिन्मुख्यत्वे गौणत्वेऽपि सिद्धान्ततः सर्वकर्ममूलेषु दैवसाहाय्यप्रयोजनीयता स्थायिनी। वस्तुतः कर्मणो जड-त्वात्तत्सञ्चालनं चेतनशक्तिसापेक्ष्यम्। यत्तु कौरचद्दार्शनिकैरुच्यते

यद्विनापि चेतनसाहाय्यं कर्म क्रियाशीलं तदसङ्गतम्। जडपदार्थास्तच्छक्तयो वा देवसाहाय्यमन्तरा न नियमेन कार्यमनुष्ठातुमर्हन्ति, जडशृङ्खलायाश्चेतनसंसाधितत्वात्। जडशक्तयोऽपि कुत्रापि स्वयं कार्यंकारिण्यो दृश्यन्ते इति चेन्न, चुम्बकस्य लौहाकर्षणं काचस्य वह्न्युत्पादनं, मेघस्य वज्रनिपातनं चेत्यादि स्वतः क्रियाशीलमपि तन्मूले बुद्धिजीविन्याश्चेतनशक्तेरवश्यं सद्भावोऽन्यथा तत्र शृङ्खलाबद्धं कार्यमसम्भवम्, व्यवस्थाशृङ्खलाभावात्तदुपयोगस्य नाणीयोपि मूल्यम्। अतो लौकिकजडशक्तीनां बुद्धिमन्मानवचालितत्वेऽलौकिकजडशक्तिसमष्टीनां देवचालितत्वे तत्तत्सदुपयोगसम्भवः। सुतरां समभ्युपगन्तव्यमेवेदं यज्जडशक्तिसम्पन्नस्य कर्मणश्चेतनशक्तिसम्पन्नानां देवानां सर्वशक्तिकेन्द्रस्वरूपसगुणब्रह्मणः परमेश्वरस्य वा द्वारा चालितत्वं विना तदुपयोगो नितरामसम्भव एव। अतः सिद्धमिदं यत् जडस्य कर्मणः क्रियाशीलता चेतनसाहाय्यसापेक्षेति ॥ ९६ ॥

सहजस्य कर्मणः सम्बन्धे प्रोच्यते—

**सहजमायत्तं प्रकृतेः ॥ ९७ ॥**

सहजं कर्म प्रकृतेरधीनमित्यर्थः। सहजकर्मणः सविस्तरं स्वरूपवर्णनं पूर्वमेव प्रतिपादितम्। प्रकृतेस्त्रिगुणतरङ्गसहजातत्वात्सहजमिति तन्नाम। तेनैतस्य प्रकृतिनिघ्नता स्वतः सिद्धा। सहजकर्मचिज्जडग्रन्थिसमुद्भूतो जीवः स्वत एवोद्भिज्जस्वेदजादिषु भ्रम्भ्रम्यमाणो मानवयोनिमधिगच्छति, सहजकर्मणश्चैतद्गतेर्नास्ति जीवेप्सितविशेषकारणम्। केवलं प्रकृतेः स्वाभाविकया गत्यैवैतत्स्वतः सम्पद्यते। तरङ्गितायाः प्रकृतेस्तमसः सत्त्वाभिमुखं संसरणादेवेयं क्रिया सम्भोभवीति ॥ ९७ ॥

पूर्वप्रसङ्गात् तत्फलं निर्दिशति—

**तस्माद्देवसाहाय्यमपेक्ष्यम् ॥ ९८ ॥**

एतस्माद्धेतोर्देवानां साहाय्यमत्रापेक्ष्यम्। सहजकर्मणः प्रकृतिनिघ्नतया, तदीयक्रियया साकं जैववासनासम्बन्धाभावाच्च नूनमिद-

मङ्गीकार्यं तत्, तद्धि पूर्णरूपेण दैवं साहाय्यं समपेक्षते, जडत्वाद्यदि कर्म चेतनशक्तिसापेक्ष्यम्, यदि च सहजेन कर्मणा सार्द्धं जैववासनाया न कोपि सम्बन्धस्तर्हि स्वीकार्यमेवेदं यत् सहजकर्मफलोत्पत्तौ ध्रुवमेव दैवसाहाय्यसम्भवः। कर्मणः सञ्चालनं यदा मानवपिण्डस्य दैवपिण्डस्य चेच्छाशक्तिक्रियाशक्तिसाहाय्यापेक्ष्यं सहजे कर्मणि च मानवीयेच्छाशक्तिसम्बन्धात्यन्ताभावश्चेत्तर्हीदं सिध्यति यत्सहजं कर्म दैवसाहाय्यसापेक्ष्यम् ॥ ९८ ॥

इदानीं जैवकर्मसम्बन्धे प्रणिगद्यते—

## जैवं जीवनिघ्नम् ॥ ९९ ॥

जैवं कर्म जीवाधीनमित्यर्थः। जैवकर्ममूले पूर्णावयवजीवस्येच्छाशक्तिः कार्यकारिणीति हेतोर्जैवं कर्म जीवाधीनमवगन्तव्यम्। सञ्चितप्रारब्धक्रियमाणसंस्काराणां मानववासनासम्भूतत्वात् तदीयसंस्कारबीजवृक्षस्वरूपस्य जैवकर्मणो मनुष्यवासना समुत्पद्यमानत्वमवश्यमेवावधेयम्, अतो जैवं कर्म जीवायत्तमिति सिद्धम् । ९९ ॥

प्रसङ्गतस्तस्य दैवसम्बन्धं निदर्शयति—

## अतस्तदर्द्धम् ॥ १०० ॥

अतः कारणात् तत् जैवं कर्म देवानामर्धं साहाय्यमपेक्षते। सहजे कर्मणि यथा किल देवानाम् इच्छाशक्तिक्रियाशक्तिसमपेक्षा, न तथा जैवे कर्मणि। तत्रामराणां केवलं क्रियाशक्तिसाहाय्यमपेक्षितमित्यतस्तत्रार्द्धं दैवसाहाय्यमभ्युपगन्तव्यम्। जैवकर्मसंस्कारसंग्रहस्तद्वासनयैव सम्पद्यमानः। अतो जीवेच्छाशक्तिसम्बन्धाज्जैवे कर्मणि जीवस्यार्द्धसम्बन्ध एव वेदितव्यः। अन्यच्च कर्मफलदातृत्वं दैवाधीनमितिहेतोस्तत्र देवानां केवलं क्रियाशक्तेरपेक्षैव, तस्मात् जैवे कर्मणि सुराणामर्द्धसम्बन्ध एव सिद्धः ॥ १०० ॥

स्थूलप्रपञ्चे कर्मसम्बन्धं निर्दिशति—

कर्मणाकर्षणविकर्षणे स्थूलसम्बद्धे ॥ १०१ ॥

कर्मणा हेतुभूतेन स्थूलसम्बन्धयुक्ते आकर्षणविकर्षणशक्ती समुत्पद्येते। कर्मणः प्रभावादेव स्थूलप्रपञ्चेषु प्रोक्तशक्तिद्वयाविर्भावः सूक्ष्मातिसूक्ष्मपरमाणोरारभ्य महीयो ग्रहोपग्रहं यावत् सर्वत्रैव परिलक्ष्यमाणे आकर्षणविकर्षणशक्ती कर्मजनिते एव। सर्वत्रैव स्थूलप्रपञ्चे शक्तिद्वयविद्यमानता प्रत्यक्षसिद्धा आकर्षणस्य, विकर्षणस्य तत्समन्वयस्य चेत्यवस्थात्रयं जायते। परस्परमाकृष्टाः परमाणवः पाषाणादीन् जनयन्त्येषाऽऽकर्षणदशा, विकृष्टाश्च ते तान् विनाशयन्तीतीयं विकर्षणावस्था। उभयोर्मध्ये विद्यमाना समन्वयस्थितिश्चेत्यवस्थात्रयं निर्विवादमेव। उपर्युक्तं शक्तिद्वयमवस्थात्रयञ्च सर्वमिदं समष्टिव्यष्टिकर्मजमेव ॥ १०१ ॥

प्रसङ्गतः शक्तिद्वयस्य गुणसम्बन्धो निर्दिश्यते—

रजस्तमोमूलकमुभयम् ॥ १०२ ॥

उभयमाकर्षणं विकर्षणं च रजोमूलकं तमोमूलकं चावगन्तव्यम्। त्रिगुणात्मकस्यैतस्य प्रपञ्चस्य सर्वाण्यप्यङ्गोपाङ्गानि न त्रिगुणभिन्नानि। संसारप्रपञ्चमूलकारणभूतायाः प्रकृतेस्त्रिगुणात्मकत्वात्तदुत्पन्नः सर्वेऽपि पदार्थास्त्रिगुणात्मकाः सिद्धाः। एतत्प्राकृतिकनियममनुसृत्याकर्षणं रजोगुणप्रादुर्भूतं विकर्षणं च तमोगुणसम्भूतमनुसन्धेयम्। प्रपञ्चस्यावस्थात्रयं प्रत्यक्षतोऽपि सिद्धम् परमाणूनामन्योन्यमाकर्षणं रजोजनितं ब्रह्मणश्चतुराननस्य सृष्टिकार्यमुच्यते, शक्तिद्वयसमन्वयो हि भगवतः श्रीविष्णोः स्थितिकार्यं, तच्च सत्त्वगुणात्मकमेव, परमाणूनां विकर्षणं पृथग्भाव एव भगवतो रुद्रस्य तमोगुणात्मकं संहारकार्यमवसीयते, सुतरामाकर्षणं राजसिकं विकर्षणं च तामसिकं सिद्धम् ॥ १०२ ॥

[ क्रमशः ]

पुस्तक समीक्षा—

# एकाङ्किसंस्कृतनवरत्नसुषमा

## ले०—डॉ० नारायण शास्त्री काङ्कर:

प्रकाशक—राजस्थान साहित्य अकादमी उदयपुरम्।

डॉ० नारायणशास्त्री-काङ्करविरचिता, राजस्थानसाहित्यअकादमी (संगम) उदयपुरम्—द्वाराप्रकाशिता एकाङ्किसंस्कृतनवरत्नसुषमा स्वकीयां परमां शोभां बिभ्रती साहित्यिके जगति सम्प्रति विभाति।

संस्कृतसाहित्येऽधुनातने युगे शास्त्रीयं तत्त्वं वहन्तः मानवमूल्यानि सन्दिशन्तः एकाङ्किनः क्वाचित्काः एव पत्रपत्रिकासु दृश्यन्ते तेषु प्रस्तुतस्य नवरत्नस्य रात्नार्थ्यम् वैलक्षण्यानुगुण्यम् च प्रव्यक्तं वर्त्तते।

केषांचिदेकाङ्किनां साफल्यं त्वभिनेयतामभीक्ष्यैव निर्धारयितुं शक्यते। नाटकेषु क्लिष्टा भाषा, छन्दोयोजनाः शास्त्रसरणेरनुसृतिश्च नाभिनेयतामतिशेरते! विषय-भाव-भाषा-रचना शैल्यादि समन्वितः अभिनेयतागुणः एव सम्प्रति समीक्षकैः सामाजिकैश्चापेक्ष्यते। नाटकेषु एतद्दृष्ट्या सर्वेऽत्रसुग्रथिता एकाङ्किनः विद्यालयेषु पुस्तकालयेषु सांस्कृतिकसंगमेषु वा सम्यगभिनेतुं योग्याः सन्ति।

ऐतिहासिकैः पौराणिकैरितिवृत्तैस्सहैव सामाजिकैः काल्पनिकैश्चेतिवृत्तैः समलङ्कृताः केचित् स्वातन्त्र्ययज्ञाहुति धनिकधूर्त्तता प्रतिभा चमत्कारसदृशा एकाङ्किनः अभिनवां सामाजिकचेतनां साफल्येन समुद्घाटयन्ति!

कथावस्तु-कथोपकथन-पात्र-चरित्रचित्रण-भाषा-रचनाशैल्यादितात्त्विकतां पारिशेष्यात् संवहन्तः सर्वे एकाङ्किनः संस्कृतैकाङ्किपरम्परां पूरयन्तः प्रातिनिध्यंवहन्तः विराजन्ते।

श्री काङ्करमहोदयानामेषा परमरमणीया कमनीया कृतिः संस्कृतज्ञैः सामान्यैः अपश्चिमविपश्चितैः विद्वद्भिः समीक्षकैश्च सुतरामभिनन्दनीयेति सूर्योदस्य विश्वासः। श्री काङ्करमहोदया राजस्थानसाहित्याकदमी निदेशकमहोदयाश्च शतशः सत्प्रयासार्थमभिनन्द्याः।

कलापूर्णं मुद्रणसौन्दर्यं, ग्रन्थग्रथनम् कर्गलादिकबाह्यावरणं चाभ्यन्तरीणं रसरोचिष्णुतामेवार्चन्ति।—[ सं० ]

पञ्जीकृत-संख्या—एल० आर० एन/

# सूर्योदयस्य नियमा:

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादे (मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे २/ पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विता: १२ अङ्काः प्रकाश्यन्ते। नवी प्रथमाङ्कतः (जनवरीअङ्कतः) एव स्वीक्रियते। माध्यमिकेन केना अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वार संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्राल तस्तदनागमनस्य निर्णय कृत्वैव १० दिनाङ्कानन्तरं वय सूचनीयाः

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रका नीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम् अस्वीकृता लेखादयः पोस्टविभागीय चिटिका (टिकट) प्राप्त्यनन्त परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थ विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्ट लेखनीयम् तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशन शुल्कक्रमश्च अधोलिखितोऽस्ति सार्वकालिकस्य दीर्घकालिकस्य च विज्ञा पनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) | साधारणस्य प्रत्यर्धपृष्ठस्य | ६ |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २० |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रि | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराण**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थल—आनन्दकानन प्रेस, सी-के० ३६/२०, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहा
मासिकं संस्कृत

वर्षम् ५४



अङ्क : ९
संयुक्ताङ्कः सितम्बर १९७७



संरक्षिका
श्रीमती विद्यादेवीजी महोदया



प्रबन्ध सम्पादिका
श्रीमती एस० बी० पाई०



वार्षिक मूल्यम्
९/०० रूप्यकाणि



प्रत्यङ्क-मूल्यम्
१/०० एकरूप्यकम्



सम्पादकः — डॉ० परमहंस

सह सम्पादकौः—
डॉ० कपिलदेव पाण्डेयः श्रीश्यामविह



तव परिजनोक्तिर्विजयते —

जपो जल्पः शिल्पं सकलमपि मुद्राविर
गतिः प्रादक्षिण्यं भ्रमणमशनाद्याहुतिवि
प्रणामः संवेशः सुखमखिलमात्मार्पण
सपर्या पर्यायस्तव भवतु यन्मे विलसि
सुधामप्यास्वाद्य प्रतिभयजरामृत्युहर
विपद्यन्ते विश्वे, विधिशतमखाद्या दिवि
करालं यत् क्ष्वेडं कवलितवतः कालक
न शम्भोस्तन्मूलं तव जननि ताटङ्कमहि
किरीटं वैरिञ्च्यं परिहर पुरः कैटभ
कठोरे कोटीरे, स्खलसि जहि जम्भारिमु
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य
भवस्याभ्युत्थाने तव परिजनोक्तिर्विज

# विषयानुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५४ तमे वर्षे ] वाराणसी भाद्रपद २०३४ सितम्बर १९७७ [ अंक : ९

## ❋ पृथिवी नः प्रथतां राध्यतां नः ❋

सत्यं बृहदृतमुग्रं दीक्षा तपो,
ब्रह्म यज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्यु –
—रुं लोकं पृथिवी नः कृणोतु॥
असंबाधं मध्यतो मानवानां,
यस्या उद्वतः प्रवतः समं बहु।
नाना वीर्या ओषधीर्या बिभर्त्ति,
पृथिवी नः प्रथतां राध्यतां नः॥ [ अथर्ववेद १२–१ ]

महत् सत्यं, रौद्रं ऋतम्, दीक्षा, तपः, ब्रह्म, यज्ञः एते सर्वे सामरस्यतः पृथिवीं धारयन्ति। एवं दिव्यशक्ति-प्रतीकैः धारिता धरित्री, अस्माकं प्राणिनां सुदूरातीतभूतवर्त्तमानभविष्यतां धारयित्री रक्षिका च धरणी प्रत्यक्षमिमं विपुलं विश्वं सर्वेषामस्माकं कल्याणायैव विदध्यात्।

इयं मातृकल्पा वसुमती मानवानामस्माकं पुत्ररूपाणां मध्येवात्सल्यं विराजमाना सर्वबाधाराहित्येन वात्सल्यं वितरति। यस्यास्तलानि उच्चैस्तमानि निम्नानि समानि च शोभन्ते। निम्नोन्नतेषु समतलेषु वा क्षेत्रेषु या माता प्राणिनां कल्याणाय विविधवीर्यसंवलितानोषधान् वनस्पतींश्च धारयति, एवंभूता पृथ्वी अस्मान् यशस्विनः समृद्धांश्च विदधातु।

[ पूर्वतोऽनुवृत्तम्

# श्रीमहर्षिज्ञानानन्दचरितं महाकाव्यम्

## स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः

### [ द्वाविंशे सर्गे ]

घटिकाद्वयमङ्गकर्त्तनं कृतमेभिः परमेष धैर्यवान् ।
इह कास्ति कथा तु चीत्कृतेर्नहि सीत्कारमपीषदाचरत् ।। ७१ ।।

शितशल्यचिकित्सनक्रियासुसमाप्तौ बुबुधे यतीश्वरः ।
परितः परिखिन्नमानसान् निजभक्तान् निजगाद सान्त्वयन् ।। ७२ ।।

विपदां तु समागमे धृतिर्न च हेया भुवि सम्पदागमे ।
दम एतदुदीरितं बुधैर्नयशास्त्राब्धिरहस्यवित्तमैः ।। ७३ ।।

नहि कश्चिदपीश्वरोऽभवत् स्वशरीरस्य सदैव रक्षणे ।
गम आगम इत्युभौ सदा परिदृष्टौ ननु संसृताविह ।। ७४ ।।

जठरे वसतां च देहिनामिह निर्धारितमायुरस्ति यत् ।
परिभुज्य समेऽपि देहिनो जहति ह्यात्मवपूंषि सत्वरम् ।। ७५ ।।

क्रियमाणमदोऽस्ति नैव मे निजदिष्टं परिभुक्तमेव हि ।
अपि सञ्चितकर्म भस्मसादभवन्नाद्य ममस्थितिर्भवेत् ।। ७६ ।।

स हि दत्तसमाह्वयो मुनिर्य इहास्तेऽत्रितनूज ईश्वरः ।
मम मानसमास्थितः सदा विविधज्ञानततिं समैरयत् ।। ७७ ।।

बहुधान्यमहर्षयोऽपि मे हृदि चाविश्य वितन्वते स्म यत् ।
तदिह प्रकटीकृतं मया मम नास्त्यत्र महत्त्वमण्वपि ।। ७८ ।।

हृदि यस्य च यस्य च मे मुनेः कृपया ज्ञानमभूत्प्रकाशितम् ।
भुवि तस्य च तस्य च नामतो ग्रथिता सन्ति निबन्धराशयः ।। ७९ ।।

अदसीयविकासने ध्रुवं निजयत्नो न च मे मनागपि ।
अत एव मया तदर्पितं विजतामेति बुधान् क्षमापये ।। ८० ।। [ क्रमशः ]

सम्पादकीयम्—

# का नाम फलश्रुतिः ?

संस्कृतभाषा देवभाषा, इयं सुरभारती, गीर्वाणवाणी विश्ववाङ्मयालंकारेश्वरी, सर्वसाहित्यसौहित्यसंवर्द्धिनी, समग्रज्ञान-विज्ञानकदम्बकादम्बिनी, श्रुतिस्मृतिशास्त्र-पुराणेतिहासादिविश्वविश्रुतार्यसाहित्यसम्पदनुवर्त्तिनीति बहुशः सगौरवमुद्गिरन्तः राजनेतारः प्रख्यातयशस्काः विभिन्नायोगेषु आयुक्तरूपेण मनोनीताः विद्वन्मन्याः विद्वांसो विचारकाश्च चतुर्दिक्षु दृश्यन्ते। प्रतिभाति यदेते सहृदयाः संस्कृतानुरागिणः कियन्तश्चिन्तिताः सन्ति ! संस्कृतसमुन्नतये सम्यक् समुद्यताः एते प्रतीयन्ते--वेदनाव्यथिताः कृष्णवत् कनिष्ठिकया संस्कृतसौरभेयीस्थलं गोवर्द्धनं धारयितुमातुराः संस्कृतविदुषां कष्टमपाकर्त्तुमुद्विग्नाः सन्तः यथाकथमपि श्वसन्ति ! वचनमात्रेणैव संस्कृतभाषायाश्चरमप्रकर्षं चिन्तयन्तश्चतुर्दिक् रुचिरां चित्रां वाचमुच्चारयन्तो अकर्मण्याश्चतुरचूडामणयश्चक्षुषा प्रत्यक्षीक्रियन्ते। समाचारपत्रेष्वेतेषां वचांसि स्थूलाक्षरैः मुद्रिताः दृश्यन्ते। बहुशः संस्कृतसमुन्नतिसमस्यावैषम्यं समाधातुं समाधानान्यपि समाचारपत्रेषु समितिषु गोष्ठीषु एभिः प्रस्तूयन्ते। एतदतिरिक्तं विद्वन्मूर्धन्यान् सर्वशास्त्रपारङ्गतान् ऋषितुल्यान् जगद्गौरवयोग्यांश्च भाषन्ते। अयं क्रमः स्वतंत्रे भारतेऽतिशायितयाऽद्यावधि प्राचुर्येण दृग्गोचरीभवति।

पृच्छति सूर्योदयः सर्वान् एतान् संस्कृतसमुन्नत्यै समुद्घोषयतः विचारकवृन्दान् मनस्यन्यत् वचस्यन्यत्प्रतीकान् राजनेतॄन्--सर्वस्यैतस्य सहानुभूतिसूचकस्य--शब्दकदम्बस्य किं फलम् अद्यावधि समुपलब्धम् ? शास्त्रवचनेषु फलश्रुतयः दृश्यन्ते। भवद्वचनानां का फलश्रुतिः ?

अस्य प्रश्नस्य कारणं समुपस्थितं वर्तते सम्प्रति ! प्रथमतः बहु प्रचलिते प्रचारिते बहुत्र प्रचालिते च १० + २ + ३ शिक्षासूत्रे संस्कृतस्य समुपेक्षणम्, द्वितीयतः संस्कृतानुरागिणां यत्र-तत्र सत्याग्रहानशनाय वैवश्यम् ! किमिदमकारि दैवेन दुरभिसन्धिसन्धानसन्धेन यत् सुरभारत्याः प्राक्तनकालत एव लीलास्थलीयं भरतभूः सर्वात्मना कल्मषकलुषिताचारप्रचारिकया वैदेशिक्याऽऽङ्गलवाचा दुर्गतिग्रस्ता सम्प्रति मेकालेमानसपुत्रैरद्यापि त्रस्ता वर्तते !

समक्षमेव विद्यते शारदापत्रिकायाः २३।८।७७ दिवसीयो विंशतितमोऽङ्कः। यत्र मुखपृष्ठ एव दिल्लीसत्याग्रहतीर्थे संस्कृतरक्षणार्थं प्रयतमानानां, सत्याग्रहमुखेन शासनस्य दृष्टिनिक्षेपं संस्कृतसमुन्नत्यै प्रत्यावर्त्तयितुकामानां संस्कृतानुरागिणां चित्रम्, अन्तिमे च पृष्ठे हृदयविदारकं शारदासम्पादकानां वैदुष्यवैराग्यवीर्यवत्तया दीप्तमुखमण्डलानां किन्तु सत्याग्रहाशनायाकार्श्यकषायितकलेवराणां चित्रम् यत्र तान् शिक्षामन्त्रिप्रातिनिध्यं कुर्वाणः संसत्सदस्यः, डा० वसन्तकुमारपण्डितः फलरसं पाययति !

जननि जगदम्बिके ! कुत्र त्वं शेषे ! अशेषितक्रियाणां लोककल्याणायैव कर्मप्रसक्तानां संस्कृतानुरागिणामियं दुर्दशा दृश्यतेऽस्मिन् तव हृदयदेशे भारतदेशे ! एवेति कथम् !

आश्चर्यं तु तदा भवति यदा सर्वत्र विश्वे संस्कृतसमुदयाय सम्मेलनानां विश्वोद्घोषः सडिडिममुद्घोष्यते ! द्रष्टुं शक्यते तावत् ऐषमः वर्षे एव प्रथमतः भारतस्य सांस्कृतिकराजधान्यां वाराणस्यां सार्वभौमसंस्कृतप्रचारकार्यालयस्य संयोजकेन त्यागमूर्तिना श्रीमता वासुदेवशास्त्रिणा समायोजिते कार्यालयस्य रजतजयन्तीमहोत्सवे निखिलभारतीया विद्वद्वरेण्याः समुपस्थिताः आसन्। आंग्लदेशीयः हूकरमहोदयोऽपि तत्र सम्मिलितवान्। समारोहे राष्ट्रियविकासाय त्रिभाषासूत्रे संस्कृतमनिवार्यम् इति प्रधानः विचारणीयो

विषयः आसीत् । तत्रैव शिक्षासम्मेलने, अखिलभारतीय-प्रचारकसम्मेलने विदेशीयसंस्कृतप्रचारसम्मेलने संस्कृत-पत्रकारसम्मेलने वा सर्वत्र संस्कृतस्यानिवार्यत्वं विचारितं । मुख्याधिवेशने च प्रस्तावेषु द्वितीयस्तु विशेषतः संस्कृतस्या-निवार्यत्वमुद्दिश्यैव पारितः । अयं महोत्सवः फरवरीमासस्य चतुर्दश-पंचदश-दिनाङ्कयोः समपद्यत ।

द्वितीयतः अगस्तमासस्य १६-१७-१८ तारिकासु तीर्थ-राजे भारतीयपरिषत्समायोजितं निखिलभारतीयसंस्कृत-सम्मेलनं सम्पन्नम् । तत्रापि विद्वद्गोष्ठीषु संस्कृतसमुन्नति-सन्दर्भे पत्रकारसम्मेलने च संस्कृतोत्थानाय च प्रतिश्रुतं सर्वैरिति ।

तृतीयतः संस्कृतसेवासंस्थानद्वारा राजधान्यामेव संस्कृतशिक्षाविषये कृतेनैकेन संस्कृतसुरक्षापर्यालोचनेन एष निष्कर्षः प्रतिफलितः यत्संस्कृतभाषायाः सुरक्षार्थं तदध्ययनाध्यापनाय च व्यापकः प्रभावपूर्णश्च पदक्रमः नितरामपेक्षितः ।

चतुर्थतः अखिलभारतीयसंस्कृतमहामण्डलस्य पंच-माधिवेशने पंढरपुर्यां महाराष्ट्रे कार्यवाहकराष्ट्रपतिना वा० दा० जत्तीमहोदयेन संस्कृतशिक्षायाः संस्कृतपंडितानां विद्यार्थिनां च ह्रासमवलोक्य भृशं दुःखितेन प्राकाटि यत् समग्रभारतीयप्राथमिकमाध्यमिकशिक्षासु संस्कृतमनिवार्यं स्यात् ! तत्र प्रधानमन्त्रिणा मोरारजीदेसाईमहाभागेन चोक्तं यत् भारतीयज्ञानानां भारतीयसंस्कृतेश्च संस्कृतमक्षयो निधिः ।

ऐषमः प्रसङ्गे स्मरणीयमस्ति तृतीयविश्वसंस्कृतसम्मेलनं पेरिसनगरीयमधिवेशनञ्च, यत्र भारतीया विद्वन्मूर्धन्याः श्रीमन्तः बदरीनाथशुक्लमहाभागाः, डॉ० सुब्रह्मण्य-शास्त्रिणः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसंधान-संस्थानस्य निदेशकाः डॉ० भगीरथप्रसादत्रिपाठिनश्च सम्मिलिता समुपस्थिताः आसन् ! तत्रापि विविधविषयक-व्याख्यानमालायाम् संस्कृतसमुन्नत्यै विचाराणामादान-प्रदानं जातम् ! इन्दोनेशियारूसदेशीयैः विद्वद्भिः संस्कृतस्य मूल्यस्थापनायै निबन्धाश्च तत्र पठिताः ।

एतच्चित्रमस्ति संस्कृतसामर्थ्यप्रदर्शनस्य । विश्ववायु-मण्डले संस्कृतं सम्प्रति प्रसरति, प्रसरणशीला च दृश्यते! किन्तु हन्त रे ! भारतीयं शासनम् ! यत्र 'वचने का दरिद्रता' इति न्यायमनुसृत्य केवलया वाचनिकयैव वाचोयुक्त्या परि-सान्त्वनं क्रियते संस्कृतज्ञानाम् ! 'संस्कृतं रक्ष्यतां सर्वैः प्राणैरपि धनैरपि' इति साम्प्रतिकः समुद्घोषः सत्याग्रहेऽनशन-कारिणां संस्कृतानुरागिणां सर्वेषाम् । इति वैवश्यमस्माकं संस्कृतज्ञानां यत् 'नान्यः पन्थाः विद्यतेऽयनाय इतिवत् नान्यत्मार्गमवशिष्टं सत्याग्रहमन्तरेण । इत्येवं सूर्योदयः पृच्छति स्वतः स्वमेव ! किमियमेव फलश्रुतिः सर्वस्यैतस्य महोपक्रमस्य ?

संस्कृते एका कथा भवति ढपोरशंखस्य । शंखः कथयति 'वदाम्येव ददामि न' नैतदुचितम् । सूर्योदयः विनिवेदयति वारं वारं संस्कृतमाहात्म्योद्घोषकान् वरेण्यान् विचारकान् शासकान् प्रति हृदः पुनरीक्षणाय शिक्षायां संस्कृतस्य संस्कृतेः च समर्थतया संस्थापनाय ! त्रिभाषा सूत्रे च अनिवार्यतया संस्कृतसंप्रवेशायेति शम् ।

# श्रीवेणीमाधवपुरन्यासद्वारा संस्कृतविदुषां सत्कारसमारोहः

उपर्युक्तन्यासस्य न्यासाध्यक्षैः न्यासस्योद्देश्य३ङसंख्यानुसारम् इदं निर्णीतं यत् न्यासद्वारा सदाचारधर्माचारसदनुष्ठाननिष्ठानां ब्राह्मणानां संस्कृतविदुषां सपर्या अनिवार्यत एषमत एववर्षतः आरभ्य प्रतिवर्षं कर्तुं न्याय्या । न्यासः सम्प्रति सक्षमोऽपि वर्त्तते । एवं निर्णीय २०३४ तमाब्दस्य भाद्रपदकृष्णपक्षस्य षष्ठयां शनिवासरे समारोहः निर्धारितः ।

आध्यक्ष्यं च सत्कारसमारोहस्य सम्पूर्णानन्दविश्वविद्यालयस्य कुलपतिना माननीयेन श्रीमता करुणापतित्रिपाठिना अङ्गीकृतम् । महनीयाः विद्वान्सश्च सूचिताः । तैश्चमहात्मभिः कृपया न्यासाध्यक्षाणाम् प्रार्थना स्वीकृता ।

सेयं शोभना सुमङ्गलया च वेला समागता । निर्धारिते समये सभाध्यक्षाः सत्कार्याः विद्वान्सश्च सर्वैः चाक्षुषप्रत्यक्षीकृताः । समुपस्थितैः सामाजिकैः सद्यः समभ्युत्थानेनानेनाभिनन्दिताः ब्रह्ममय्याः देव्याः गायत्र्याः विष्ण्वादिदेवानां च दर्शनानन्तरं मन्दिरस्य सभामण्डपे निश्चितसभास्तरणसुस्थाने सर्वे विराजमानाः विद्वान्सः संरेजिरे ।

आचार्यप्रवरेण वैदिकमूर्धन्येन श्रीमता भोलानाथोपाध्यायेन सम्पादिते वैदिके मङ्गलाचरणे, आचार्योपाधिधारिणा श्रीमता श्यामविहारित्रिपाठिना च विहिते पौराणिके मङ्गलाचरणे, अध्यक्षाः माल्यार्पणेनाभिनन्दिताः।

समारोहस्य संचालकेन डा०परमहंसमिश्रमहोदयेन पराम्बायाः पादारविन्दमकरन्दमधुकरेण प्रथमम् परमाराध्यायाश्चरणस्मरणपूर्वकम् तस्याः संस्थायाः परिचयः समुपस्थापितः यया एषः समारोहः सुनियोजित आसीत् । विद्वत्प्रणतिपुरस्सरम् तेन संक्षेपेणैव एवं वाचां विन्यासो व्यधायि येन कार्यक्रमे वैलम्ब्यं मा पतेत्ः –

## न्यासस्य परिचयः

अस्ति मीरजापुरजनपदे विजयपुरं नाम नामानुरूपमेव राज्यम् । तत्रत्याः राजवंश्या पुरुषाः विविधविरुदसंवलिताः धरित्रीभूर्वहाः विश्वजनीनविदुषामाश्रवाः गुणज्ञाश्च सर्वदैव विरेजिरे । तेषामेवासीत् स्वनामधन्याः श्रीवेणी माधवप्रसादसिंहनामा परमधार्मिकः गुणज्ञः गुणिनां गुणानां महनीयतानुमन्ता ।

यथा मणिकाञ्चनयोगेन चरमस्य चमत्कारस्य अचिरादेव समुत्पत्तिर्भवति तथैव एतस्य राजन्यर्षभस्य शिष्यत्वेन समायोगोऽभूत् महर्षिणा श्रीमता १००८ ज्ञानानन्दस्वामिना । एष महाप्रभुः आसीत् दत्तात्रेयावतार एव साक्षात् श्रीभारतधर्ममहामण्डलस्य संस्थापकः । स्थापनकाले सम्भूतोऽर्थाभावः केन प्रकारेण पूर्येत इति महर्षेरासीत् अनुयोगः तत्कालीनानां राजेश्वराणां समक्षम् इति वित्तेन ते संस्थां तर्पितवन्तः किन्तु विजयपुरस्थः महाराजः स्वत एव भूमिदानार्थं विन्यवेदयत् । निस्पृहस्य महर्षेः भूमिः किमासीत् तात्पर्यम् । वित्तेन तर्पणीयाः सामान्या एव भवन्तीति स्वामिना न्यासस्थापनार्थं समादिष्टः श्रीवेणीमाधवप्रसादसिंहः आदेशानुसारमेव स्वनाम्नैव लक्ष्यभूमौ पुरावासमुद्दिश्य न्यासमेकं श्रीवेणीमाधवपुरट्रष्टनामानं निर्माय मीरजापुर एव सविधिविधानं पंजीयनं च संव्यधात् ख्रीष्टीये १९३२ तमे वर्षे । न्यासस्य सर्वस्वस्याधिकारिणं श्रीभारतधर्ममहामण्डलं जुघोष च । अन्तरालेऽनन्तानन्तरायराशीनपाकृत्य न्यास-

नियमतः स्वर्गतस्य राज्ञः श्रीमतः वेणीमाधवसिंहस्य उत्तराधिकारिणं श्रीमन्तं तदेकपुत्रं राजानं श्रीनिवाससिंहं चात्मरूपं कृत्वा मीरजापुरजनपदन्यायाधीशन्यायालयतः न्यासाध्यक्षनियुक्तिनिर्णयः समुपलब्धः। न्यासाध्यक्षनिर्णये जाते सत्वरमस्माभिः न्यासभूमेः सुव्यवस्थायै निर्भरं प्रयतितम्।

वाराणस्यां काशीहिन्दूविश्वविद्यालये कृषिविभागे आसीत् एकत्र चक्राङ्किताया: विशालपुष्कलायाः कृषियोग्याया भूमेरावश्यकता, यत्र कृषिसंकायतः विकासकार्यस्य चारितार्थ्यं स्यात्, आधुनिकभूमिविकासपद्धतेः प्रयोगानुसन्धित्सूनां प्रयोगविधा च यत्र परिपूर्येत।

ज्ञात्वेदं वयं न्यासाध्यक्षाः तत्कालीनं महिमान्वितं कुलपतिं के० एल० श्रीमालीशुभामिधेयं मिलितवन्तः। परस्परं विचाराणामादानप्रदानानन्तरम् विनिश्चिता भूमिधनविनिमयेन भूमेः शश्वद्हस्तान्तरणव्यवस्था। ख्रीष्टीयाब्दस्य १९७५ तमे वर्षे पंजीयनं च सुसम्पन्नम्। न्यासस्य स्थायिन आयस्य मूलस्रोतस्विनी व्यवस्था च विहिता।

अद्यावधि अस्य न्यासस्योद्धारे नवतिसहस्रपरिमितो धनराशिः व्ययीकृतः आसीत् सर्वस्वत्वाधिकारिणा श्रीभारतधर्ममहामण्डलेन। ऋणरूपेण प्राप्तस्य एतावतः पुष्कलस्य धनराशेः प्रत्यावर्त्तनमपि न्यासेन समारब्धम्।

अस्मिन्नेव वर्षे गवां संरक्षणाय गोशालानां साहाय्यम् च सम्पन्नम्।

अयं समारोहः अस्य न्यासस्य महात्म्यं दिशति। अनेन पुण्यकर्मणा न्यासः धन्यमिव स्वं संमनुते।

पञ्चचत्वारिंशद्वर्षाणि व्यतीतानि अयं न्यासः प्रतिष्ठापितः किन्तु वक्तुं शक्यते अद्यावधि एकस्यापि न्यासोद्देश्यस्य पूर्तिः न भवितुमशक्नोत्। न्यासस्थापनान्तरं प्रथमोऽयं महत्त्वपूर्णोऽवसरः अकारण-करुणावरुणालयायाः परम्बाया अनुग्रहात् समुपलब्धः यस्मिन् एतदनुष्ठातुं न्यासः सानन्दं प्रवृत्तः। वर्त्तमानाः न्यासाध्यक्षाः वयम् अमन्दानन्दसन्दोहम् अनुभवन्तः अद्य सर्वशक्तिमन्तं परमेश्वरं ध्यायामहे, मातरं पराम्बां प्रत्यभिज्ञायामहे, मीरजापुरस्थविजयपुरकुलदेवान् स्मरामः बरकछाभूमिस्थान् वनदेवांश्च विचारयामः—अयमवसरः सर्वेषामेतेषां वरैः शुभाशीर्वादैः समुपस्थितः यस्मिन् अत्रभवतां सपर्यां वयम् विदधामः।

अस्माकम् इयम् घोषणा वर्त्तते यत् यावान् न्यासस्य आयः स्यात् तेन प्रतिवर्षम् वयम् संस्कृतविदुषां, धर्माचारसदाचारसदनुष्ठाननिष्ठानां ब्रह्मणानां सत्कारं कुर्म ? अन्येषामुद्देश्यानां पूर्तिं चाचरिष्यामः। वयं न्यासाध्यक्षाः समादेशं याचामहे समारोहसभाध्यक्षान् सपर्यां प्रारब्धुम्। पत्रपुष्परूपेण सार्द्धद्विशतमुद्रयोत्तरीयेण च वयम् आचार्यान् अर्चयित्वा पश्चादाशीर्वचनानि च याचामहे।

एवं न्यासपरिचयानन्तरम् आचार्यवर्यवरेण्याः श्रीमन्तः सुरेन्द्रनाथशास्त्रिमहाभागाः विदुषां चरितावलीं संजगदुः। सर्वप्राथम्येन समभ्यर्थितुं योग्यानां सर्वविद्यावरेण्यानां सर्वतन्त्रस्वतंत्राणां श्रीमतां पं० रघुनाथशर्मणां परिचयः प्रस्तुतः श्रीमद्भिः शास्त्रिवर्यैः। परिचयक्रमे—तेषां वैदुष्यम्, तेषामध्यापनक्षमत्वम्, सहस्रशिष्यत्वम्, कृतीनां कृतिकारत्वं वर्त्तमाने च समये यदा श्रीमन्तः शास्त्रिणः सेवाकार्यविरताः सन्ति—अनिशं शास्त्रसेवनम्, चिन्तनम् च सर्वं शास्त्रिवर्यैः सम्यक् प्रत्यपादि।

एवमेव तैः श्रीमन्तः पट्टाभिरामशास्त्रिणः परिचयेनोपवर्णिताः। तेषां मीमांसाशास्त्रमाहात्म्यं माहात्म्यभिधानेन अभ्यधायि। वैदिकचक्रचूडामणीनां श्रीमतां पं० रामनाथमिश्राणां शुभाभिधानप्रसङ्गे शान्तिप्रतीकतया विराजमानानां शान्तानां शान्तचेतसां भावप्रणतया शास्त्रिणः तद्गुणालंकारतया विरेजिरे।

ये तु स्वयमेव दर्शनकेशरिणः तेषां स्वर्गस्फुरितकीर्तिकेतूनां का कथा ? वाग्वीर्यवत्तया विभासमानानां गाण्डीव-

सम्पादकानां पं०गोपालशास्त्रिणां सम्बन्धे तत्कृतीनां सन्दर्भे च भृशमभाणि शास्त्रिवर्य्यैः।

श्रीमन्तो महानुभावाः महादेवरूपाः महादेवोपाध्यायास्तु साक्षात् साहित्यमहोदधय एव सन्ति। आजीवनं तैः संस्कृतभाषा सेविता। निवर्त्तमानजीवनेऽपि एते स्वगृहे—स्वकीयावासे आचार्य्यान्तेवासिन अध्यापयन्ति। एवं संक्षेपेणाभ्यधाय शास्त्रिणः विरेमुः।

तदनन्तरं डा० कपिलदेवपांडेयाः आर्यमहिलाडिग्रीकालेजे संस्कृतप्रवक्तारः एतं सन्दर्भं न्यासोद्देश्यपूरकमिमं महत्त्वपूर्णमवसरम् अभ्यागतान् साम्प्रतिकान् ऋषींश्च परिचयमुखेनाभिनन्दयामासुः। मुख्यतया पाण्डेयमहोदयैः श्रीभारतधर्ममहामण्डलसंस्थापकान् स्वनामधन्यान् भगवत्पूज्यपादान् श्रीज्ञानानन्दस्वामिमहर्षीन्, तेषां सुमहद्यशःसमन्वितां तदुत्तराधिकारिणीं शिष्यां तामां श्रीमतीं विद्यादेवीं च निर्दिश्य तद्यशः स्मारं स्मारं गुरुवर्यान् प्रणेमुः। तैरेकागीतिकापि प्रस्तुता—

वेणीमाधव-पुर-सुन्यासः,
धन्यस्तस्य क्रमिक-विकासः।

अन्तराल-निकुरम्ब-विनाशः,
सम्प्रति प्रसरति परं प्रकाशः,
विद्यादेवी-यशोविकासः,
परमहंस-पुरुषार्थविलासः,
सर्वः सम्प्रति लगति सहासः।
धन्यस्तस्य क्रमिक-विकासः॥

सफला विद्या सफलो योगः,
धन्यः सम्प्रति धनोपयोगः,
नश्यति दृष्ट्वा मानस-रोगः,
न्यासः सिद्धः सर्व-पुरोगः,
प्रसरत्यभिनव-यशो-विभासः।
धन्यस्तस्य क्रमिक-विकासः॥

न्यासनन्दिताः सदास्फूर्जिताः,
यत्र पण्डिताः सर्व-पूजिताः,
विश्ववन्दिताः रश्मि-राजिताः,
सुयशस्विनः सदापराजिताः,
ददत्याशिषः जयतान्न्यासः॥
धन्यस्तस्य क्रमिक-विकासः॥

श्रीमता डॉ० रामरङ्गशर्ममहोदयेन सर्वेषां मनीषिमूर्धन्यानां समादरः देवगिरैव संविहितः। संक्षिप्ते स्वकीये प्रवचने तेन व्याहृतम् यत् सौभाग्यमेवास्माकं संस्कृतानुरागिणां यत् एषोऽवसरः श्री वेणीमाधवपुरन्यासेन स्वकीयोद्देश्योद्देशं पूरयता प्रदत्तः। एते पञ्चापि विपश्चिद्विपश्चिमाः विश्वविश्रुताः विद्वान्सः परमशिवस्य पंचमुखप्रतीकाः सततं सर्वेषां भारतीयसंस्कृतिसंस्कृतानुरागिणां प्रेरणारूपा एव। एतेषां समादरेण विश्वप्रचं न्यासस्यैव समादरः, न्यासस्य स्थापनसाफल्यमेतत् येनैतादृशोद्देश्योऽन्यासः स्वनियमविधौ विहितः। पञ्चापि सारस्वतवरदपुत्रास्तु सर्वदैव सत्कार्याः किन्तु न्यासस्तु सर्वतः धन्यवादार्हः। धन्यः न्यासस्यापनकर्त्ता श्रीमान् विजयपुरनरेशः वेणीमाधवप्रसादसिंहः, धन्याः श्रीमन्तः महर्षिज्ञानानन्दमहाराजस्वामिनः न्यासस्थापनासंप्रेरयितारः, धन्याश्च वर्त्तमानाः न्यासाध्यक्षा श्रीमतीविद्यादेवीजीमहोदया श्रीमन्तः स्वनामधन्याः डॉ० परमहंसमिश्रमहोदयाश्च।

अहंतु सर्वं वस्तुतत्त्वं जाने। वस्तुतः एतेषां नामतः परमहंसानां किन्तु कर्मणा परमकर्मण्यानां पुरुषकारेण सत्प्रयासेन, निर्भयं मीरजापुरे प्रयतमानेन न्यासस्य समुद्धारः जातः। सम्प्रति सर्वेश्वर्याः पराम्बायाः परमानुग्रहेण सर्वाबाधाविनिर्मुक्तः न्यासः यद्विदधाति तत्पुरत एव प्रस्तुतं वर्त्तते! अस्माकं मानसमयूराः नृत्यन्ति, मातुः पराम्बायाः कृपाकादम्बिनी वर्षति पीयूषरसानुरूपम् अनुग्रहम्! सर्वं शोभनं साम्प्रतम् अनुभवामि। एते पञ्च श्लोकाः मामकीनां छन्दस्वतीम्

वाचं व्याहरन्ति यत्र अस्मद्-हार्दिक्यम् समुद्भावितं विद्यते । पद्यानीमानि क्रमिकतया पंचसत्कृतगुरुजनानां कृते प्रवर्त्तितानि, तानि इमानि सन्तिः —

( १ )

समस्त-शास्त्रार्थ-महार्णवं भुवः,
सदेह-वाचस्पतिमत्र संस्थितम् ।
अनन्तशिष्यं 'रघुनाथ' नामकं,
नमामि सूर्याधिकतेजसां निधिम् ॥

( २ )

दिगन्त-विक्रान्तयशोविभूषितम्,
तरस्विनं शास्त्रचणं महाबुधम् ।
लोकेऽत्र पट्टाभिमहार्थ-संकुलं,
रामं नमामो भवभूषणं मुदा ॥

( ३ )

घनान्तवेदव्यवहारसंस्तुतं,
तपोनिधिं कर्मपरायणं मुनिम् ।
नमामि नाथं खलु रामपूर्वकम्,
सरस्वतीपुत्रमपूर्ववेधसम् ॥

( ४ )

निरस्तवादं समदर्शनं पुनः,
समस्त-शास्त्रौघमहाटवीपतिम् ।
नमामि गोपालगुरुं सुशास्त्रिणम्,
सुदर्शनं दर्शनकेशरीश्रुतम् ॥

( ५ )

अशेषसाहित्यपयोधि-पङ्कजं,
सहस्रशिष्यं भुवि भारविं परम् ।
गुरुं महादेव-महाकवीश्वरम्,
प्रणौमि श्रद्धास्पदपादपुष्करम् ॥

( ६ )

अयि सभागतपूज्य-बुधेश्वराः,
विविधशास्त्रविचार-विचक्षणाः ।
मतिमतां भवतां शुभसत्क्रिया,
जयतु संस्कृतसंस्कृतिसंगता ॥

तदनन्तरम् आर्यमहिलामहाविद्यालयप्राध्यापकेन श्रीमता श्यामविहारित्रिपाठिना विदुषां सभाजनं सुभगतया श्रद्धया सम्पादितं । देवगिरैव श्रीभारतधर्ममहामण्डलसंस्थापकान् श्रद्धां समर्प्य श्रीमतीं विद्यादेवीं च स्मारं स्मारं तेन स्वीयं योगदानं प्रकटितं श्री वेणीमाधवपुरन्यासरक्षणे । पश्चा-देषा गीतिका च श्रीमता श्राविता सेयमस्ति—

स्वागतं, स्वागतं, स्वागतम् ।
कुर्महे श्रीमतां स्वागतम् ॥१॥

धन्या धरित्रीयं धन्यो देवालयः,
भवतामागमनेन धन्यो धर्मालयः ।
सद्यो हि मङ्गलं समागतम्,
कुर्महे श्रीमतां स्वागतम् ।
स्वागतं स्वागतं स्वागतम् ॥२॥

पूर्वपुण्य-पुञ्जेन श्रीमतां दर्शनम् ।
जातं भवदंघ्रिपद्मपांसूनां स्पर्शनम् ॥
कष्ट-प्रदं कल्मषं सत्वरमपाकृतम् ।
स्वागतं...... ॥३॥

अत्यन्त-प्राचीनं धर्ममहामण्डलम्,
प्राप्नोति शान्तिमत्र मानसं सुमङ्गलम् ।
विदुषामागमनेन दृश्यं विकासितम् ।
स्वागतं स्वागतं स्वागतम् ॥४॥

स्वामिज्ञानानन्दस्य तपसा समर्जितः
सदा धर्मसेवया सर्वैः समर्चितः
श्रीवेणीमाधवपुरन्यासोऽयं साम्प्रतम् ।
स्वागतम्...... ॥५॥

भाद्रपदकृष्णस्य षष्ठ्यां शनैश्चरे,
ब्रह्ममयी-सन्निधौ संस्थिते महेश्वरे ।
आगत्य सर्वैरनुष्ठितं महाव्रतम्,
कुर्महे श्रीमतां स्वागतम् ।

स्वागतं स्वागतं स्वागतम् ॥६॥
श्रद्धा-प्रसूनैश्च दिव्यगन्धमालया,
भावेनभक्त्या च, प्रेमाश्रुजालया ।
पुनः पुनः पूजयामः गायामः स्वागतम्,
स्वागतं ...॥७॥

कायेन वाचा च मनसा सुविद्यया,
प्राप्तं फलं सर्व्वं श्रीयोगमायया ।
आगतं हि निखिलं तत् यदासीदनागतम्,
कुर्महे स्वागतं श्रीमतां स्वागतं ।
स्वागतं स्वागतं स्वागतम् ॥८॥

स्वागताभिनन्दनानन्तरं न्यासाध्यक्षेण श्रीमता डा० परमहंसमिश्रेण—ऋषिकल्पानां विद्वद्वरेण्यानामर्हणं यथाविधि तिलकाक्षतमाल्योत्तरीयार्पणविधिना सम्पादितम् । दक्षिणा चायुर्वेदरत्नाकरकविराजब्रजमोहनदीक्षितमहाभागानां करारविन्देनादापि ।

पूजनानन्तरं सर्वे स्वनामधन्याः विद्वान्सः स्वकीयाभिनन्दनोत्तरं वाग्भिराशीर्भिः सर्वान् समागतानभिषिषिचुः । सर्वप्रथमम् श्रीमद्भिः पण्डितप्रवरैः रघुनाथशर्मभिः वर्त्तमानायां परिस्थितौ स्वकीयं चिन्तनं प्राकाटि । तैरवादि यत् वेदान्तविषये निर्विकल्पब्रह्मसम्बन्धीनि विचारेऽस्माभिः बहु अनवद्यं विचारितम् वर्त्तते । सुविशदं तद्व्याचक्षाणैः तैः सगद्गदं न्यासः धन्यवादेन सभाजितः ।

श्रीमद्भिः पट्टाभिरामशास्त्रिभिस्तु ससमाससमभिव्याहारं सूत्रमेवागादि । महदर्थगर्भिताभिरुक्तिभिः तैः स्वकीये महीयस्यस्तित्वे अणीयस्याः अणुताया आरोपणं कृत्वा न्यासकृतात्ह्वानं चित्रमित्यचेति ! न्यासं चाशीभिरभिषिच्य वाचंयमत्वमङ्गीकृतम् ।

श्रीमद्भिः गोपालशास्त्रिभिः दर्शनकेशरीति विश्रुतोपाधिविभूषितैः श्रीभारतधर्ममहामण्डलसंस्थापकान् श्रीमतः ज्ञानानन्दस्वामिनः यशः पुष्कलतया स्मारं स्मारं श्रीमत्याः विद्यादेव्याश्चेत्थंकारं कीर्तिं वारं वारं व्याहृत्य श्रीवेणीमाधवपुरन्यास पौरुषेण, शक्त्या, नीत्या, विधिना चेतस्तरमानेतुं, महत्त्वपूर्णमेतमवसरं चानेतुम् भृशं न्यासाध्यक्षाः आशीर्वचनैरभिषिक्ताः । तैः स्वामिनां महर्षीणां ज्ञानानन्दमहाप्रभूणां शिष्यत्वं च प्रागेवाङ्गीकृतमासीदित्यपि तैर्व्याहृतम् । भविष्यति च संस्थायाः समुत्कर्षसमीहामभिधाय ते विरेमुः ।

तत्पश्चात् साहित्यसुधासाररसमुद्रैः विद्वन्मूर्धन्यैः श्रीमद्भिः महादेवोपाध्यायशुभाभिधेयैः सुप्रसन्नगम्भीरगिरा न्यासाध्यक्षाणां प्रशस्तेयं कार्यप्रथेति भृशं प्राशंसि । मातरं श्रीमतीविद्यादेवीमहोदयां चाभिलक्ष्य तस्या आजीवनं धर्मार्थं प्रयतमानतां चोदिश्य सगौरवम् गिरामुपयोगोऽकारि । तेषामियं गीतिरचना सन्दर्भं पुनाति —

## श्रीविश्वनाथो विजयते

मीरजापुरमण्डलान्तर्वर्तिश्रीवेणीमाधवपुरसम्पत्तिसमुपयोजकसमितेरौदार्यौचित्यसम्भृतसत्कृतिविनिवेदककतिपयवचांसि—

विद्याऽविद्यास्वरूपेण जगदुद्धारकारिणीम् ।
सद्ज्ञानानन्दशक्तिं तामाश्रयेऽचिन्त्यवैभवाम् ॥१॥

न स्वोपभोगपरता भविता हिताय,
विद्याऽवनप्रहरिणः परितर्पणीयाः ।
इत्थं निधेः सुविनियोजनसत्समित्याः,
भावोद्भूतो विजयते बुधसाधुवादः ॥२॥

देवप्रियामरगवीसमुपासकानां,
विद्यैव लक्ष्यतमतां परमभ्युपैति।
यद्यस्ति दृष्टिरयि तत्र तवाम्ब ! विद्ये !
श्रेयः परं भवति वा किमतो बुधानाम्॥३॥

श्रद्धादयास्मृतिमतिप्रसरद्विभूति-
रूपाम्बसेवनपराप्त-तथागुणश्रीः।
युक्तः श्रिया परमहंसपदादिमिश्रः,
देदीप्यते समितिसंहननाङ्गभूतः॥४॥

आबाल्यतोऽनुभवपद्धतिमेति येषाम्,
औदार्यधर्मचयसंस्कृतिपूत-कृत्यम्।
तेषां कथं न विदुषां समुपासनेषु,
श्रद्धाभरः प्रसरतामयतामजस्रम्॥५॥

यो पूर्वजार्जितयशोविभवं जनानां,
प्राशस्त्यवाद-समलङ्कृतमातनोति।
नानाविधोत्तमपदोचितधीविलासः,
जीयाद्दरोत्र शिवनन्दनलालनामा॥६॥

गोविद्वदावलिसमादृतिदत्तचित्ता,
नैकार्यकार्य-विनियोजितभूरिवित्ता।
जोयाच्चिरं त्रिविबुधीविबुधप्रयुक्त-
श्रेयःप्रशस्तिभरभूषितभव्यभावा॥७॥

स्थानम्—
**भारतधर्म-महामण्डलप्राङ्गणम्**
**वाराणसी**

प्रयोक्ता
महादेव उपाध्यायः, वाराणसी ३-९-७७

विद्वद्वरेण्यानां सत्कारानन्तरं तेषामाशीर्वचसां च विरामे समारोहाध्यक्ष्यं सम्पादयतां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयकुलपतीनां श्रीमतां करुणापतित्रिपाठिनां प्रवचनपीयूषमाचामन् सर्वे समुपस्थिताः सामाजिकाः। स्वकीये सारगर्भिते वचनरचनाचातुर्यचमत्कृते प्रवचने न्यासद्वारा समाहूतानां विदुषां सत्क्रिया तैः श्रद्धया समर्थिता। तैरगादि यत् श्रीभारतधर्ममहामण्डलम् एकं वैराज्यविभूषितं समस्तपूर्वहिन्दूराजन्यवर्गसमर्थितम्, समग्रपीठाधीश्वराचार्याणामाशीर्वादैकपात्रम् सर्वप्राचीनं धर्मसंस्थानम्। अस्य संस्थानस्य प्रतिष्ठापकानां महर्षिज्ञानानन्दमहाप्रभूणां, तदुत्तराधिकारिण्याः श्रीमत्या विद्यादेवीमहोदयायाः न्यासाध्यक्षाणां च क्रियाकलापं स्मारंस्मारं ते सर्वान् उत्साहसम्पन्नान् संव्यदधुः।

कार्यक्रमसमाप्त्यनन्तरं सभाध्यक्षाणां प्रवचने सम्पन्ने, न्यासस्य सर्वस्वत्वाधिकारिश्रीभारतधर्ममहामण्डलसंस्थाया उपाध्यक्षैरायुर्वेदरत्नाकरैः कविराजब्रजमोहनदीक्षितैः स्वकीये धन्यवादभाषणे साम्प्रतिके युगे संस्कृतविदुषां महत्त्वं सर्वैरभ्युपगन्तव्यमिति संजगादि। तैरुक्तम् श्रीभारतधर्ममहामण्डलेन प्राक्तनकालादेव स्वजन्मत आरभ्यैव महाप्राणैः प्रयासैः धर्मस्य संरक्षणं कृतम्। अद्यावधि अनया संस्थया शतशः शास्त्रग्रन्थाः संग्रथ्य संमुद्रिताः प्रकाशिताः प्रचारिताश्च। शताधिकाः क्रतवः स्वस्थापिते यज्ञमण्डपे समगादि। धार्मिकाध्यात्मिकसंस्कृतविद्यापीठस्य तत्सम्बन्धिनः परीक्षाविभागस्य संचालनम्, उपदेशकमहाविद्यालस्य च संचालनम् अनया सततं क्रियत एव। अस्य महामण्डलस्य पोषिका अन्या सर्वा विश्वेश्वर महामाया-श्रीवेणीमाधवपुरसमितयश्च धर्मस्यैव धुरं धारयन्ति।

अयं न्यासः समुपस्थितायाः देव्याः साक्षात् विद्यारूपाया वर्तमानमहामण्डलसंचालिकायाः तथा डा०परमहंसमिश्रस्य पुरुषार्थस्य प्रतीकएव सम्प्रति सूर्योदय इव स्वकीयामाभां वितरति।

अन्ते च उपाध्यक्षैः सर्वे धन्यवादेन समर्हिताः विद्वांसः समागताः संस्कृतानुरागिणश्च। समारोहेऽस्मिन् संस्कृतविश्वविद्यालस्य गण्यमान्याः विद्वद्वरेण्याः काशीविद्यापीठस्य विद्वान्सः नागरीप्रचारिणीसभासदस्याः काशीहिन्दूविश्वविद्यालयस्य प्रवक्तारश्च समुपस्थिता आसन्।

मासीत् । शासनद्वारा स्वीकृतेन पथा प्रस्थितः समारोहजनसमूहः अप्रत्याशिततया कुलाङ्गारैरवरुद्धः ! किमासीत्तस्य कारणम् !

धर्माचारे वैमत्यं पृथक् वस्तु भवति ! कश्चित् कमपि धर्ममाचरति कश्चित् कमपि मान्यतां ददाति ! किन्तु साक्षात्सहिष्णुतया जीवनं शान्तिमूलकं कृत्वा सर्वम् समं पश्यति समं च व्यवहरति । न धर्मः पारस्परिकं वैमत्यं परिवर्द्धितुमादिशति, न सम्प्रदायः कदाप्याज्ञापयति परस्परं कलहायितुं, न कोपि विचारशीलः पुरुषः एवंभूतं दूषणं समर्थयति !

जनसमूहः जनन्याः जयघोषं कुर्वन् गच्छन्नासीत् ! एतेन किं जातमासीत् स्वयं सर्वात्मना ईमानमतावलम्बिनां समक्षमिति प्रश्नः स्वभावतः जार्गति ! समारोहः पथि क्रमशः प्रचलन् पन्थानमतिक्रम्य किमपि दूषणमपि नहि अकरोत् । स तु प्रचलन्नेवासीत् । क्रमशः स गङ्गायास्तटमनुप्राप्य स्वकर्त्तव्यतां पूरयितुमेव प्रवृत्त आसीत् किन्तु तत्र यदभूत् तत् तैमूरिकां बर्बरतामेव दिशति । अस्मिन्नपि युगे—यदा देशः स्वतंत्रो वर्त्तते ! सत्यं मानवताया मूल्यमेव एतैरपास्तम् !

मातुः परामबायाः विग्रहस्य प्रस्तरैः खण्डनं समग्रहिन्दुजातेः हृदयस्य खण्डनमिव सर्वहृदयानि पीडयत्येव ! निरपराधेषु श्रद्धालुषु शतघ्नीसंचालनम्, गोलिकाभिरङ्गभेदनम्, इष्टकाप्रहारैः जनानां ताडनम्, विविधतया विद्रावणम्, सर्वमेतत् प्रत्यक्षं गोचरीकृतं दौर्जन्यं कुलाङ्गारैराचरितम् !

सूर्योदयपरिवारः सुसन्तप्तः वर्त्तते एतेनासद्व्यवहारेण। इति भगवन्तं प्रार्थयति—यदस्मिन्नेव भरतभुवस्तले पलिताः एतस्मिन्नेव वायुमण्डले श्वासप्रश्वासपूरिताः, धमनीषु हिन्दूनामेव रक्तधारिणः, खरकरवालभयेन धर्मान्तरमङ्गीकारिणः हिन्दव एव मुस्लिमनामधारिणः कथं दूषितधिषणाः तिष्ठन्ति !

विस्मरन्ति च भ्रातृभावम् सर्वदा- सर्वेषु समारोहेषु धार्मिकेषु उत्सवेषु च प्रदर्शयन्ति दुःशीलतामिति महदान्तरिकं सामाजिकं च कष्टम् वर्तते !

शासनं व्यवस्थां स्थापयति, विरोधिनः षड्यन्त्रं विदधति, शान्तिप्रियाः हिन्दवः मुस्लिमजनाश्च व्यथन्ति । अत्र भगवानेव शरणम् ! माता परामबा दुर्गा एवात्र प्रमाणम् !

पाकिस्ताने जातेऽपि विधर्मिणः त्रोटयन्ति आराध्यविग्रहान्- इति त्वमेव भगवन्नवतर ! रक्ष धर्मम् । तव प्रतिज्ञा अस्ति—

रक्षणाय च साधूनां विनाशाय च दुष्कृताम्,
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।

# काव्य-निरूपणम्

कविशेखरः— डा० भोलानन्द मिश्रः डी० लिट्०
साहित्य-निकेतन, ब्रह्मपुर, सीतामढ़ी बिहार)

काव्यप्रकाशकर्त्तुर्मते काव्यलक्षणमुच्यते :—

तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि, इति। एतच्चिन्त्यम्। तथाहि यदि दोषरहितस्यैव काव्यत्वं तदा—'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः" इत्यादि—श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्। प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता।

ननु—ईषदर्थे नञः प्रयोग इति चेत्तर्हि 'ईषद्दोषौ शब्दार्थौ-काव्यम्' इत्युक्ते निर्दोषयोः काव्यत्वं न स्यात्। सति संभवे—'ईषद्दोषौ' इति चेत्, एतदपि काव्यलक्षणे न वाच्यम्, रत्नादिलक्षणे कीटानुवेधादिपरिहारवत्। नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः। किंतूपादेयतारतम्यमेव कर्त्तुम्।

किञ्च शब्दार्थयोः सगुणत्व—विशेषणमनुपपन्नम्। गुणानां रसैकधर्मत्वस्य 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः'—इत्यादिना तेनैव प्रतिपादितत्वात्।

ननु शब्दार्थौ सगुणौ, इत्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेन्न। गुणाभिव्यञ्जक-शब्दार्थवत्त्वस्य काव्ये उत्कर्षमात्राधायकत्वम्, नतु स्वरूपाधायकत्वम्।

१—वक्रोक्तिजीवितकारमतेन वक्रोक्तिः काव्य-जीवितम् बोध्यम्।

२—ध्वनिकारमतेनोक्तम्-काव्यस्यात्मा ध्वनिरिति।

३—आग्नेयपुराणोक्तदिशा—वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् इति।

४—व्यक्तिविवेककारेणाप्युक्तम्—"काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्यचिद् विमतिः" इति।

५—ध्वनिकारेणाप्युक्तम्—नहि कवेरितिवृत्तमात्रनिर्वाहेणात्मपदलाभः, इतिहासादेरेव तत्सिद्धेः।

६—आचार्यवामनमतेन—रीतिरात्मा काव्यस्येति।

७—विश्वनाथ—मतेन—वाक्यं रसात्मकं काव्यम् इति।

अस्योदाहरणम्—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै—
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं,
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥

८—रसगंगाधरोक्तदिशा काव्यलक्षणम् :—

रमणीयार्थप्रतिपादकः शब्दः काव्यम्। रमणीयता च लोकोत्तराह्लादजनक-ज्ञानगोचरता। लोकोत्तरत्वञ्च, आह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जाति-विशेषः। कारणञ्च तदवच्छिन्ने भावनाविशेषः पुनः पुनरनुसंधानात्मा। पुत्रस्ते जातः, धनं ते दास्यामि इति वाक्यार्थधीजन्यस्याह्लादस्य न लोकोत्तरत्वम्। अतो न तस्मिन् वाक्ये काव्यत्वप्रसक्तिः। इत्यञ्च चमत्कार-जनकभावना-विषयार्थप्रतिपादकशब्दत्वम्। यत्—प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्। स्व-विशिष्ट-जनकतावच्छेदकार्थप्रतिपादकता-संसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। वस्तुतः रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्, इदमेवकाव्य-

लक्षणम् युक्तम्, नतु पूर्वोक्तानि लक्षणानि। यत्तु प्राञ्चः, अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम्,—इत्याहुः; तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्।

यत्तु 'रसवदेव काव्यम्, इति साहित्यदर्पणे निर्णीतम्, तन्न शोभनम्। वस्त्वलंकारप्रधानानां काव्यानाम्—काव्यत्वापत्तेः। न चेष्टापत्तिः, महाकविसम्प्रदायस्याकुलीभावात्। प्रसंगाद् वा।

अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमत्वादिति शम्।

शब्दचित्रं वाच्यचित्रम् अव्यङ्ग्यम् त्ववरं स्मृतम्'—इति काव्यप्रकाशोक्तदिशा भेदाः।

रसगंगाधरोक्तदिशा — तच्च - उत्तमोत्तमोत्तम—मध्यमाऽधम—भेदाच्चतुर्धा।

शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्।

अस्योदाहरणम्—

'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।
दयिता दयितानाम्बुजं दरमोलन्नयना निरीक्षते॥'

यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद्द्वितीयम्।

उदाहरणम्—

राघव-विरह-ज्वाला-संतापितसह्यशैलशिखरेषु।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय॥

यत्र व्यङ्ग्यचमत्कारा समानाधिकरणो वाच्यचमत्कारस्तत्तृतीयम्।

यथा यमुनावर्णने—

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति।

अत्रोत्प्रेक्षा वाच्यैव चमत्कृतिहेतुः।

यत्र - अर्थचमत्कृपस्कृता शब्द-चमत्कृतिः प्रधानं तदधमं चतुर्थम्। यथा—

मित्रात्रिपुत्रनेत्राय त्रयी-शात्रयशत्रवे।
गोत्रारि-गोत्रजत्राय गोत्रात्रेते नमो नमः॥

अत्रार्थचमत्कृतिः शब्दचमत्कृतौ लीना।

वस्तुतः संस्कृतसाहित्ये काव्यत्वम्, हिन्दीसाहित्ये काव्यत्वम्, मैथिली साहित्ये (भोजपुरी—मगही—भगदत्तपुरी—मौद्गल—बज्जिका—साहित्ये) काव्यत्वम्, पालिसाहित्ये काव्यत्वम्, वंगसाहित्ये—काव्यत्वम्' यवनानां साहित्ये (उर्दू—फारसी—अरबीसाहित्ये)—काव्यत्वम्, आंगल-साहित्यें काव्यत्वम्, मुण्डा-साहित्ये—(संथाली-साहित्ये) काव्यत्वम्, कन्नड—तेलगू—तामिल—मलयालम—असमी-साहित्ये काव्यत्वम्, खालसा—गुजराती—मद्रासी—साहित्ये काव्यत्वम्, रूशी—फ्रेंच—इटली—साहित्ये—काव्यत्वम्, जर्मनी—वर्मी (जापानी)—यूनानी साहित्ये—काव्यत्वम्, मागधी—अवन्ती—शौरसेनी—प्राच्यसाहित्ये—काव्यत्वम्, चीनीसाहित्ये काव्यत्वम्। तत्तद्देशीय—नेपाली (कुर्गीसाहित्ये) काव्यत्वम्। संसृतेः सर्वविध-साहित्ये—काव्यत्वम्, यत्र रमणीयार्थ-प्रतिपादकानाम् शब्दानाम् सुसन्निवेशः। संस्कृत-साहित्यस्य पुत्रीरूपिणो संसृते :—समग्राः भाषाः काव्यादयश्चेति नात्र केषाञ्चित् विप्रतिपत्तिः। आर्य-भाषानुगताएतद्देशस्य चतुर्दशभाषाः संविधानस्वीकृताः। सिन्धी भाषा च पञ्चदश। आर्यभाषानुगताः समग्रानाम् देशानाम् भाषाः।

'तीनि कोश मे बोली बदले, पाँचि कोश मे भाषा' इति कस्यचित् कवेर्वाणी निर्बाध-मूलिका। भारोपियनभाषापि आर्यभाषायाः पुत्री। भाषाविज्ञानविदः—केचन विद्वांसः विज्ञानेभाषा-विज्ञाने च इयम् सरणिरुपस्थापिता; कदम्बमुकुलन्यायेन, देहलीदीपन्यायेन, काकाक्षगोलक-

न्यायेन । अधुनातन-भाषाविज्ञानपतंगाः केचन मीमांसकाः हिन्दी-भाषा-विज्ञाने आर्य-भाषाधीने भारोपीयनभाषायाः सम्मेलनम् अकृत्वा प्रपञ्चिते विश्वे निजपाण्डित्यम् व्याहरन्तोऽल्पज्ञाः मूर्खास्सन्ति । कथं विश्वविद्यालये तेषां प्रबला प्रसवितरस्ति त एव जानीयुः । ते मण्डूकप्लुत्या मीमांसन्ते ।

'अपारे काव्य संसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वम् तथैतत् परिवर्त्तते ॥'

"कविर्मनीषी प्रतिभूः स्वयम्भूः" इत्याग्नेयपुराणोक्त--दिशा अधुनातन – कर्मकीटाः पतंगाः हिन्दी-विज्ञान--मीमांसकाः परास्ताः" ।

## रस-निरूपणम्

अथ कोऽयं रस — इत्यपेक्षायाम् विश्वनाथोक्त-दिशा रसलक्षणम्—उच्यते

विभावेनानुभावेन व्यक्तः संचारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥

रसगङ्गाधरोक्तदिशा तल्लक्षणम्—

समुचित-ललित-संनिवेश-चारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावना-विशेषमहिम्ना विगलितदुष्यन्तरमणीयत्वादिभिरलौकिक-विभावानुभावव्यभिचारिशब्द-व्यपदेश्यैः शकुन्तलादिभिः आलम्बनकारणैः, चन्द्रिकादिभिरुद्दीपन- कारणैः, अश्रुपातादिभिः कार्यैः, चिन्तादिभिः सहकारिभिश्च, संभूय प्रादुर्भावितेन–अलौकिकेन–व्यापारेण तत्काल-निर्वर्तितानन्दांशावर णज्ञानेनातएव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया–वास्तवेन निज-स्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः ।

अथ स्व-स्व-प्रतिभोन्मेषेण "विभावानुभावव्यभिचारि-संयोगाद्–रसनिष्पत्तिः" इति नाट्यशास्त्रपङ्क्तिकां व्याचक्षाणानामनेके पक्षाः । तत्र भट्टलोल्लट-प्रभृतीनामेष सिद्धान्तः–स्थायिनां विभावेन,–उत्पाद्योत्पादकभावरूपानुभावेन गम्य-गमकभावरूपाद् व्यभिचारिणा पोष्य-पोषकभावरूपात् सम्बन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः ।

ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुज-निक्षेपणादिभिः—प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठा-दिभिः परिपोषितो रामादावनुकार्ये नाट्येनाभिनेये रसः ।

'स्थायिनां विभावादिभिः समं व्यंग्य—व्यञ्जकभाव-रूपात्'— संबन्धाद् विभावादीनां वा परस्परं संयोगान्मिलनाद् रसस्य निष्पत्तिरभिव्यक्तिः इति अभिनवगुप्ताचार्य-महोदयाः ।

नव्यानां तु—

काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावा-दिषु–व्यञ्जनाव्यापारेण रामादौ सीतादिरतौ गृहीतायामनन्तरं च–सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितरामत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यसीता-विषयक–रत्यादिरेव रसः इति । अयं च कार्य्यो दोषविशेषस्य । नाश्यश्च । तन्नाशस्य स्वोत्तर-भाविना लोकोत्तराह्लादेन भेदग्रहात्सुखपदव्यवहार्य्यो भवति । स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात्तत्प्रतित्वेनैकत्वाध्यवसा-नाद् वा व्यङ्ग्यो वर्णनीयश्चोच्यत इत्यादि रसगङ्गाधरे प्रपञ्चितम् ।

अस्मन्मते तु 'मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शन-कोविदे दुष्यन्ताद्यनुकर्तरि

नटे समारोप्य साक्षात्क्रियते' इत्येके। अयं नटः शकुन्तलादिविषयकरतिमान्—दुष्यन्तः। मतेऽस्मिन्साक्षात्कारो दुष्यन्तोऽयं शकुन्तलादिविषयकरतिमानित्यादिः प्राग्वद्धर्म्यंशे लौकिक आरोप्यांशे त्वलौकिकः। स च—

'शृङ्गारः करुणः शान्तो रौद्रो वीरोऽद्भुतस्तथा।
हास्यो भयानकश्चैव बीभत्सश्चेति ते नव॥'

इत्युक्तेर्नवधा। मुनिवचनं चात्र मानम्। इत्युपक्रम्य—'शान्तोऽपि नवमो रसः, इति मम्मटभट्टा अप्युपसमहार्षुः। अमीषां च—

'रतिः शोकश्च निर्वेद – क्रोधोत्साहाश्च विस्मयः।
हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी॥'

रसेभ्यः स्थायिभावानां घटादेर्घटाद्यवच्छिन्नाकाशादिव प्रथम-द्वितीययोः, सत्यरजतस्यानिर्वचनीयरजतादिव तृतीये, विषयस्य–(रजतादेः) ज्ञानादिव चतुर्थे भेदो बोध्यः। तत्र आप्रबन्धं स्थिरत्वादमीषां भावानां स्थायित्वम्। इति शम्।

# किं नाम साहित्यम्

श्री पं० विद्याधर-द्विवेदी,
सहायक––साहित्यप्राध्यापकः
श्रीस्याद्वादमहाविद्यालयस्य, वाराणसी

काव्यशास्त्रस्य कृते काव्यालङ्कार-क्रियाकल्पालङ्कार-शास्त्र-साहित्यशास्त्रप्रभृतिशब्दानां प्रयोगः प्रायो विभिन्नेषु लक्षणग्रन्थेषु लक्ष्यग्रन्थेषु चापि समवलोक्यते। तत्र काव्यशास्त्र–काव्यालङ्कार – क्रियाकल्पालङ्कारशास्त्रशब्दानां विस्तारभयाद् विवेचनं परित्यज्य साहित्यशास्त्रशब्दसम्बन्धे किञ्चिद् विवेचयिष्यते तत्रापि विशेषेण साहित्यशब्द-सम्बन्धे। शब्दोऽयं साम्प्रतं न केवलं काव्यशास्त्रस्य कृते प्रयुज्यते प्रत्युत यस्यां कस्याञ्चिदपि भाषायां यं कमपि विषयमादाय विरचितं सम्पूर्णं वाङ्मयमेव साहित्यशब्देनाभिधीयते। यथा संस्कृतसाहित्यमित्युक्त्या न केवलं संस्कृतस्य काव्यशास्त्रं गृह्यते प्रत्युत संस्कृतभाषायां निबद्धं निखिलं वाङ्मयमेवैतच्छब्देनोपस्थाप्यते। एवमेव हिन्दी-साहित्यम्, बंगसाहित्यम्, आङ्गलभाषासाहित्यमित्यादि। वस्तुतः साहित्यशब्दोऽयं व्युत्पत्तिलभ्यादर्थात् केवलं काव्यशास्त्रस्यैवार्थे प्रयोज्योऽस्ति तथापि प्रवृत्तिनिमित्तत्वमादाय व्यापकेऽर्थे साम्प्रतं प्रयुज्यमानो दृश्यते। मन्ये आङ्गलभाषायाः "लिटरेचर" शब्दस्यात्र प्रभावोऽस्ति। यतो हि आङ्गलभाषायां "लिटरेचर" शब्देनैव काव्यशास्त्रं वाङ्मयं च गृह्यते। "पोयटिक्स" शब्दे तु तथा सामर्थ्यं नास्ति, तस्य कवितामात्रव्याप्तत्वेन गद्यकाव्यप्रभृतिष्वव्याप्तत्वात्। साहित्यशब्दस्य व्यापकमिममेवार्थमादाय महाकविबिल्हणेनैवमुक्तम्—

"साहित्यपाथोनिधिमन्थनोत्थं,
काव्यामृतं रक्षत हे कवीन्द्राः।
यत्तस्य दैत्या इव लुण्ठनाय,
काव्यार्थचौराः प्रगुणीभवन्ति॥"[१] इति

इदानीं साहित्यशब्दस्य व्याकरणदृशा विचारः क्रियते। यतो व्याकरणदृशा विचारमन्तरा साहित्यशब्दस्य निश्चितो

१. विक्रमाङ्कदेवचरितम्—१-११

व्युत्पत्तिलभ्योऽर्थो नैव निर्णेतुं शक्यते । हितेन सह वर्तते इति सहितं तस्य भावः साहित्यमिति कैश्चिदुच्यते कैश्चिच्च सहितयोः ( सम्मिलितयोः शब्दार्थयोः ) भावः साहित्यमित्युच्यते । तर्हि एतयोर्विग्रहयोर्मध्ये कतर औचित्यमावहति, कस्माच्च कारणादिति विचारमर्हति । सहितशब्दात् भावे ष्यञ्[1] प्रत्ययं आदेरचो वृद्धौ साहित्यमिति शब्दो निष्पद्यते किन्तु प्रसङ्गेऽस्मिन् सहितशब्दो विशेषेण ध्यातव्यः । सहशब्दात् "तदस्य सञ्जातं तारकादिभ्य इतच्[2]" इति सूत्रेणेतच्प्रत्यये कृते[3] 'षहमर्षणे' धातोः क्तप्रत्यये इडागमे विहिते[4], "डुधाञ् धारणपोषणयोः"धातोः क्तप्रत्यये "दधातेर्हि" इतिसूत्रेण ह्यादेशे 'हित'शब्दस्ततश्च सहेन सह समासे कृते[5], एवमेव समुपसर्गपूर्वकात् धाधातोः क्तप्रत्यये समो मकारस्य च विकल्पेन लोपे कृते सहितशब्दः[6] सिद्ध्यति । अन्यच्च--हितेन ( कल्याणेन ) सहेति विग्रहे सहस्य स आदेशे सहित[7]शब्दः साधयितुं शक्यते । तदेवमुपरि निर्दिष्टक्रमानुसारेण सहितशब्दः व्याकरणदृष्ट्या प्रायः पञ्चभिः प्रकारैर्व्युत्पादयितुं शक्यते । अत्र पञ्चस्वपि प्रकारेषु त्रैविध्यं दृग्गोचरीभवति । एकतः सहशब्दात्, इतच्प्रत्यये अथवा 'षहमर्षणे' धातोः क्तप्रत्यये कृते, परतश्च समुपसर्गपूर्वकात् धाधातोः सहशब्दाद्वा धाधातोः क्तप्रत्यये कृते, अन्यतश्च कल्याणार्थकहितशब्दस्य सहेन समासे विहिते । काव्यशास्त्रस्य पर्यायभूतसाहित्यशब्दस्यार्थसन्दर्भेऽत्र व्याख्यानेष्वेतेषु सहशब्दादितच्प्रत्ययद्वारेण निष्पन्नः सहितशब्दः, हितशब्देन कल्याणार्थकेन सह सहशब्दस्य समासेन चोत्पन्नः स-हितशब्दोऽत्र च विशेषेण विचारणीयौ । तत्रेतच्प्रत्ययेन निष्पन्नस्य सहितशब्दस्य "सह सञ्जातमस्येति सहितम् सहयुतम्" अर्थात् यस्मिन् सहार्थः समुत्पन्नस्तादृशं किञ्चिद् वस्तु इत्यर्थोऽवगम्यते । यथा-देवदत्तो यज्ञदत्तश्च क्वचित्सहैव गच्छतस्तर्हि तत्र गमने सहितत्वमस्ति । एवमेव यत्र शब्दश्चार्थश्च सहभूतौ स्तस्तत्रापि तदस्त्येव । कल्याणार्थकहितशब्देन सह सहशब्दस्य समासान्निष्पन्नस्य सहितशब्दस्य "हितेन सह वर्तते इति सहितं सकल्याणम्" अर्थात् हितसाधकं किमपि वस्तु इत्यर्थोऽवगम्यते । यथा यस्मै कस्मैचन यत् किमपि कार्यं हितार्थं भवेत् चेत् तत्कार्यं स-हितमिति वक्तुं युज्यते । प्रसङ्गेऽत्र हितेन सह वर्तते इति सहितः शब्दोऽर्थश्च । अर्थात् शब्देऽर्थे च स-हितत्वं, हितयुक्तत्वमस्ति ।

साम्प्रतं विचारणायावशिष्यते यत् सहितयोः (सम्मिलितयोः शब्दार्थयोः भावः साहित्यमिति वक्तुं योग्यमथवा स-हितयोः (कल्याणयुक्तयोः शब्दार्थयोः) भावः साहित्यमिति । एतद्विचारणात् प्रागेवैतद् ध्येयमस्ति यत् हितेन सह वर्तते इति सहितः तम्), तस्य भावः साहित्यमितीदृशं व्याख्यानं नोचितमत्र । यतो हि विग्रहेऽस्मिन् अन्यपदार्थत्वेन तावत् किं ग्रहीष्यते ? अस्तु । वस्तुतः साहित्यस्य (काव्यस्य) हितसाधकत्वन्तु प्रयोजनमस्ति न तु तदसाधारणो धर्मो येनैतल्ल-

१—सहितस्य भाव इत्यर्थे ष्यञ् प्रत्ययेन निष्पन्नम् ( शब्दकल्पद्रुमः )

२—अष्टाध्यायी—५—२—३६

३—'सहशब्दात् इतच्प्रत्ययेन च निष्पन्न इति सिद्धान्तकौमुदी' – शब्दकल्पद्रुमः । 'सह+इतच्'–'पवनाग्निसमागमो ह्ययं सहित ब्रह्म यदस्त्रतेजसा —रघु० ८।४'—वामन—आप्टेकोशः ।

४—सह् + क्त--वामनआप्टेकोशः ।

५--सह + धा + क्त-- वामन आप्टेकोशः ।

६--(सं + धा + क्त "समो वा हिततयोः" ६।१।१४४ इत्यस्य वार्तिकोक्त्या मलोपः । समभिव्याहृतः, संयुक्तः, मिलितः यथा मनुः ९।२१२। 'सोदर्या विभजेरंस्तं समेत्य सहिताः समम् । भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥' संहितः । सम्यग् हितः । इति मुग्धबोधव्याकरणम् । )— शब्दकल्पद्रुमः

७—हितेन सह वर्तमानश्च—शब्दकल्पद्रुमः ।

क्षणकोटौ स्थापयितुं शक्येत। यथोक्तं मम्मटेन-'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे[1] ॥' इति। अतोऽस्य स-हितत्वं न लक्षणपरम्। सहितत्वे (सहभावे) तु एवं वक्तुं न शक्यते प्रत्युत एतत् लक्षणपरमेव वरीवर्तीति दृढीकरणाय ऐतिहासिकः पक्षो विपक्षक्षोदनाय समुपस्थाप्यते।

सहितशब्दस्य सर्वप्रथमं प्रयोगो भामहेन काव्यलक्षणं कर्तुं प्रवृत्तेन "शब्दार्थौ सहितौ काव्यम्"[2] इत्युक्तम्। अर्थात् सहितौ सम्मिलितौ सतावेव शब्दार्थौ काव्यं काव्यपदवाच्यम्। शब्दार्थावित्यत्र द्वन्द्वसमासादुभयोरेव सहभावः सूच्यते, न तु हितसाधकत्वं स-हितत्वम्। राजशेखरेणापि साहित्यं पञ्चमविद्यात्वेन प्रतिष्ठापयता शब्दार्थयोः सहभाव एवोक्तः--"पञ्चमी साहित्य विद्या, इति यायावरीयः[3]" इति, "शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्या[4]" इति च। वक्रोक्तिजीवितकृता आचार्यकुन्तकेन साहित्यशब्दो बहु विस्तृतं व्याख्यातो येनेदमेव फलति यच्छब्दार्थयोः सहभाव एव साहित्यशब्देनोच्यते। वक्रोक्तिजीवितेऽनेन कारिकाश्लोकेषु एकत्र साहित्यशब्दः प्रयुक्तः, स्थानद्वये च सहिताविति शब्दः। तत्र व्याख्याने च तेन बहूक्तं यद्धि सहृदयैस्तत एव सम्पूर्णमवलोकयितुं शक्यते। विस्तरभयादत्र स्वपक्षदृढीकरणाय यथेष्टमुद्ध्रियते–

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥

शब्दार्थौ काव्यं वाचको वाच्यं चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमिति विचित्रैवोक्तिः।...तस्मात् स्थितमेतत्—न शब्दस्यैव रमणीयताविशिष्टस्य केवलस्य काव्यत्वम् नाप्यर्थस्येति।.... तेन शब्दार्थौ द्वौ सम्मिलितौ काव्यमिति स्थितम्। एवमवस्थापिते द्वयोः काव्यत्वे कदाचिदेकस्य मनाङ्मात्रन्यूनतायां सत्यां काव्यव्यवहारः प्रवर्तेतेत्याह सहिताविति। सहितौ सहित--(सह)भावेन साहित्येनावस्थितौ। ननु च वाच्य-वाचकसम्बन्धस्य विद्यमानत्वादेतयोर्न कथञ्चिदपि साहित्यविरहः, सत्यमेतत्। किन्तु विशिष्टमेवेह साहित्यमभिप्रेतम्। ... सहितावित्यत्रापि यथायुक्ति स्वजातीयापेक्षया शब्दस्य शब्दान्तरेण वाच्यस्य वाच्यान्तरेण च साहित्यं परस्परस्पर्धित्वलक्षणमेव विवक्षितम्।"[5] इत्यादि

"शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा।
सहिताविति तावेव किमपूर्वं विधीयते ॥

शब्दार्थविभिधानाभिधेयौ सहिताववियुक्तावेव सदा सर्वकालं प्रतीतौ स्फुरतः ज्ञाने प्रतिभासेते। ततस्तावेव सहिताववियुक्ताविति किमपूर्वं विधीयते।''''तदेवं शब्दार्थयोनिसर्गसिद्धं साहित्यं कः सचेताः पुनस्तदभिधानेन निष्प्रयोजनमात्मानमायासयति ? सत्यमेतत्, किन्तु न वाच्यवाचकलक्षणशाश्वतनिबन्धनः वस्तुतः साहित्यमित्युच्यते। यस्मादेतस्मिन् साहित्यशब्देनाभिधीयमाने कष्टकल्पनोपरिचितानि गाङ्कुटादिवाक्यसम्बद्धानि शाकटिकादिवाक्यानि च सर्वाणि साहित्यशब्देनाभिधीयेरन्।'''अतएवैतदुच्यते— यदिदं साहित्यं नाम तदेतावति निःसीमनि समयाध्वनि साहित्यशब्दमात्रेणैव प्रसिद्धम्। न पुनरेतस्य कविकर्मकौशलकाष्ठाधिरूढिरमणीयस्याद्यापि कश्चिदपि विपश्चिदयमस्य परमार्थ इति मनाङ्मात्रमपि विचारपदवीमवतीर्णः[6]।"इति।

"साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ॥"

१. काव्यप्रकाशः — १-२
२. काव्यालङ्कारः –१-२६
३, ४—काव्यमीमांसा—द्वितीयोऽध्यायः।
५. वक्रोक्तिजीवितम्—१।७
६. वक्रोक्तिजीवितम्—१।१६

सहितयोर्भावः साहित्यम् ।....अन्यूनानतिरिक्तत्व-मनोहारिणी, परस्परस्पर्धित्वरमणीया ।...शोभा सौन्दर्य-मुच्यते । तया शालते श्लाघते यः स शोभाशाली, तस्य भावः शोभाशालिता, तां प्रति ..। सैव च सहृदयाह्लाद-कारिता । तस्यां स्पर्धित्वेन यासावस्थितिः परस्परसाम्य-सुभगमवस्थानं सा साहित्यमित्युच्यते ।...तस्मादेतयोः शब्दार्थयोर्यथास्वं यस्यां स्वसम्पत्सामग्रीसमुदायः सहृदया-ह्लादकारी परस्परस्पर्धया परिस्फुरति सा काचिदेव वाक्यार्थ-विन्याससम्पत् साहित्यव्यपदेशभाग् भवति[1] ।" इत्यादि च ।

उपर्युक्तैः कुन्तकाचार्यस्य व्याख्यानैः साहित्यशब्दस्य शब्दार्थगोरुभयोरेव सहभावरूपोऽर्थः स्पष्टः । राजानकरुय्य-केणापि साहित्यशब्दस्येदमेव विवरणं प्रदत्तम्—'न च काव्ये शास्त्रादिवदर्थप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते । सहितयोः शब्दार्थयोस्तत्र प्रयोगात् । साहित्यं तुल्यकक्षत्वेनान्यूनान-तिरिक्तत्वम्[2] ।" इति । एतेनाचार्येण साहित्यशब्दस्य व्याख्यानमेव केवलमेवंविधं न कृतं प्रत्युत 'साहित्यमीमांसा' इतिनाम्नैकः ग्रन्थोऽपि रचितः । महापात्रविश्वनाथेन चतुर्दशशतकवर्तिनाऽपि स्वग्रन्थस्य नाम "साहित्यदर्पणः" इति कृतम् । सम्भाव्यते, काव्यशास्त्रस्यार्थे साहित्यशब्द-प्रयोगस्य श्रेयोऽस्यैव स्यात् यस्माद्धि नवीनयुगे काव्यशास्त्रस्य कृतेऽयमेव शब्दः प्राचुर्येण प्रयुज्यमानो दृश्यते । यद्यपि एकादशशतकवर्तिनाऽऽचार्यरुय्यकेणापि उपरिनिर्दिष्टेन, "साहित्यमीमांसा" नामको ग्रन्थो विरचितः किन्तु ग्रन्थोऽयं नाधिकं प्रचारमवाप । अतो साहित्यदर्पणस्यैव साहित्यशब्द-मादाय साम्प्रतं काव्यशास्त्रस्यार्थे वाङ्मयस्यार्थे च साहित्यशब्दः प्रयुज्यमानोऽस्तीति नैश्चित्येन वक्तुं शक्यते ।

साहित्यशब्दप्रयोगो मुकुलभट्टेन[3] प्रतिहारेन्दुराजेन[4] च कृतः । भर्तृहरिणा साहित्यसंगीतकलाविहीनः पुच्छविषाण-हीनः साक्षात् पशुरेवोक्तो[5] जनः । केनचन साहित्यं[6] सरस्वत्याः स्तनयोरन्यतरत्वेन निगदितम् । श्रीहर्षो दृढन्यायग्रहग्रन्थिले तर्के यथा सुकुमारवस्तुनि साहित्येऽपि स्वभारत्याः समलीलायित्वं सगर्वमुद्घोषयाम्बभूव[7] ।

तदेवं साहित्यशब्दस्य सहितयोः (सम्मिलितयोः शब्दार्थयोः) भावः साहित्यमित्येवार्थः प्रमाणैरुपरिनिर्दिष्टैः दृढीभवति । तत्र स-हितयोः (हितयुक्तयोः शब्दार्थयोः) भावः साहित्यमित्यर्थस्तु न रुचिकरः । कोशेषु साहित्य-शब्दस्यानेकेऽर्थाः[8] प्रतिपादिता दृश्यन्ते, किन्तु तेषु पूर्वोक्त एवार्थः काव्यशास्त्रदृशा समुपयुज्यतेतमाम् ।

---

१—वक्रोक्तिजीवितम्—१।१७

२—व्यक्तिविवेकस्य व्याख्या ।

३—"पदवाक्यप्रमाणेषु तदेतत्प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥ १४ ॥
....व्याकरणमीमांसातर्कसाहित्यात्मकेषु चतुर्षु शास्त्रेषूप-योगात् ।"—अभिधावृत्तिमातृका ।

४—"मीमांसासारमेधात् पदजलधिविधोस्तर्क-माणिक्यकोशात् ।
साहित्यश्रीमुरारेर्बुधकुसुममधोः सौरिपादाब्जभृङ्गात् ।।" इति
—काव्यालङ्कारसारसंग्रहस्य व्याख्यायाश्चरमपद्यांशः ।

५—"साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम् ।।"
नीतिशतकम्—१२

६—"संगीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरमन्यदालोचनामृतम् ।।"—कस्यचित्

७—"साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले,
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता,
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ।।" इति

८—"परस्परसापेक्षाणां तुल्यरूपाणां युगपदेकक्रियान्वयित्वं साहित्यम् । इति श्राद्धविवेकः । तुल्यवदेकक्रियान्व-यित्वम् । बुद्धिविशेषविशेष्यत्वं वा । इति शब्दशक्ति-प्रकाशिका ।। साहित्यं एकक्रियान्वयित्वम् । तद् यथा—धवखदिरपलाशांश्छिन्धि इत्यत्र धवखदिरपला-शप्रतियोगिकं यत् साहित्यं तन्निरूपितं यदवयवविभाग-रूपफलं तज्जनिका या छिदिक्रिया तदनुकूलकृति-मांस्त्वम् । इति सारमञ्जरी ।। मनुष्यकृतश्लोकमय-ग्रन्थविशेषः । स तु भट्टि-रघु-कुमारसम्भव-माघ-भारवि-मेघदूत-विदग्धमुखमण्डन-शान्तिशतकप्रभृतयः ।"
—शब्दकल्पद्रुमः ।

सम्प्रति प्रासावसरतया साहित्यशब्दस्य प्रवृत्तिनिमित्तत्वं विचार्यते। भावे ष्यञ् प्रत्यये कृते साहित्यशब्दः सिद्ध्यतीति प्रागुक्तम्। अत्र भावशब्दस्य कोऽर्थः? इति प्रश्ने समुदिते—प्रकृतिजन्यबोधे प्रकारीभूतोऽर्थः भावशब्देनोच्यते इति वक्तुं युज्यते। अर्थात् यथा गोशब्दः गोत्वजातिं निमित्तीकृत्य तद्धर्मवतीं गावं बोधयतीति प्रवृत्तिनिमित्ततया धर्मिबोधे प्रकारीभूतः स धर्मः (अर्थः) भावः, तस्मिन् वाच्ये त्वतलादयः प्रत्यया भवन्ति। एवमेव सहितशब्दः सहितत्त्व- (साहित्य-) जातिं निमित्तीकृत्य तद्धर्मवन्तौ शब्दमर्थञ्च बोधयतीति प्रवृत्तिनिमित्तत्वेन धर्मिणोः शब्दार्थयोर्बोधे भावार्थकष्यञ्-प्रत्ययो विशेषणीभूतः। अर्थात् गोत्वधर्मविशिष्टगोपदार्थवत् साहित्यधर्मविशिष्टौ शब्दार्थौ स्तः। साहित्यञ्च (सहभावः) उभयनिष्ठत्वाच्छब्दार्थयोरुभयोरेव व्यातम्। साहित्ये शब्दस्यार्थस्य च प्राधान्यम्। वेदे शब्दस्यैव, इतिहासपुराणादिषु चार्थस्यैव प्राधान्यम्, किन्तु साहित्ये (काव्ये) उभयोरेव प्राधान्यम्। यद्यपि काव्यात्मभूतस्य रसादिध्वनेः प्रसङ्गे उभयोरेव (शब्दार्थयोः) गुणीभूतत्वं जायते, तत्र तस्यैव प्राधान्यात्। अत्र तु कमपि विशिष्टमर्थं द्योतयितुं कस्यचन विशिष्टस्यैव शब्दस्याऽऽवश्यकत्वम्, एवमेव कश्चिदेक एव विशिष्टः शब्दः कञ्चिदेकमेव विशिष्टमर्थमुपस्थापयितुं क्षमः। यथोक्तम्—वक्रोक्तिजीविते—"अन्योन्यानतिरिक्तत्व—मनोहारिण्यवस्थितिः। अन्योन्यानतिरिक्तत्वमनोहारिणी, परस्परस्पर्धित्वरमणीया। यस्यां द्वयोरेकतरस्यापि न्यूनत्वं निकर्षो न विद्यते नाप्यतिरिक्तत्वमुत्कर्षो वास्तीत्यर्थः।"[1] इति। उक्तमपि केनचन—

"यानेव शब्दान् वयमुल्लिखामो
यानेव चार्थान् वयमुत्क्षिपामः।
तैरेव शब्दार्थविशेषरम्यैः
सम्मोहयन्ते कवयो जगन्ति॥" इति।

शब्दार्थयोर्यथावत्सहभावस्योदाहरणान्यनेकानि दातुं शक्यन्ते किन्तु विस्तरभयात् केवलं कालिदासीयमेकं पद्यमुदाह्रियतेऽत्र——

"द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी[2]॥" इति

अत्र प्रत्येकं पदं स्वस्थानात् परिवर्तयितुमनुचितं तादृशार्थप्रतीतेर्व्यवधानात्, विशेषेण च कपालिन इति शिवस्य विशेषणभूतं पदम्। स्वयं महाकविकालिदासेनापि शब्दार्थयोः सहभावः (साहित्यम्) सङ्केतितः "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये"[3] इत्यादिना।

उपर्युक्तैर्विस्तृतविवेचनैः स्पष्टं यत् वस्तुतः शब्दार्थयोः सहभाव एव साहित्यम्, अतः सहितयोः (सम्मिलितयोः शब्दार्थयोः) भाव इत्यनेनैव विग्रहेण निष्पन्नस्य साहित्यशब्दस्य वस्तुतः साहित्यत्वं प्रतिष्ठित भवति, न तु सहितयोः (हितयुक्तयोः शब्दार्थयो-) भावः साहित्यमिति विग्रहेण निष्पन्नस्य, तस्य साहित्यशास्त्रस्य (काव्यशास्त्रस्य) प्रयोजनत्वेन लक्षणेऽप्रवेशात्। न च प्रयोजनमेव लक्षणम्, प्रयोजन-लक्षणयोर्भिन्नविषयत्वात्। इदन्त्वन्यत् यत् यौगिकस्यास्य साहित्यशब्दस्य निर्विशिष्टं सामान्यं सहभावरूपमर्थमादाय साम्प्रतं वाङ्मयेऽर्थे प्रयोगो दृश्यते रूढः। इति दिक्

१. वक्रोक्तिजीवितम् १-१७
२. कुमारसम्भवम् ५।७१
३. रघुवंशम् १।१

# गीतायां योगशब्दः

श्रीव्रजकिशोरस्वाईं
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम् पुरी, उत्कलः

भरतवर्षस्य प्राचीनेतिहासत्वेन सर्वजनविदिता प्रसिद्धिः विश्वस्मिन् प्रकाममस्ति । तद्विषयीभूतानि, प्रकरणानि, उपाख्यानानि च प्रामाणिकानि मुख्यतः श्रीमद्भगवद्गीताशास्त्रं जगन्निवासास्यसरसिजनिःसृतं परमप्रमाणिकमेव स्वोकर्त्तुमुपयुज्यते । तदर्थमुच्यते–

'या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता'

किन्तु तत्र दरीदृश्यमाणस्य 'योग, शब्दस्य प्रयोगे का प्रामाणिकता, किञ्च तात्पर्यम् ? इति विषयमधिकृत्य सम्प्रति बहवो लब्धप्रतिष्ठा विद्वांसो लेखनिर्माणे प्रवृत्ता उपलभ्यन्ते । योगशब्दोऽयं प्रथमाध्यायस्य नामकरणादारभ्य अन्तिमाध्यायं यावद् व्यवहृतो वर्त्तते । तत्र व्यवहारे का धर्मशास्त्रीया युक्तिर्वर्त्तत इति साम्प्रतमुपस्थापयितुमारभ्यते ।

''युजिर् योगे'' इति धातोः घञ्प्रत्यये योगशब्दस्य वैयाकरणसिद्धिर्भवति, (भावे–३।३।१।८ पा० सू-सिद्धावस्थापने धात्वर्थे वाच्ये धातोः घञ् स्यत), कोषास्तु प्रमाणयन्ति यथा–

योगसंहननोपायध्यानसंगतियुक्तिषु
(अमरकोषः १३।३।२३)

योगोऽपूर्वार्थसम्प्राप्तौ संगतिध्यानयुक्तिषु
वपुः स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे
विश्रब्धघातके द्रव्योपायसंहननेष्वपि
कार्मणेऽपि च, (मेदिनीकोषः २३।१८।१९)

सकलशास्त्राणामितिहासभावेन श्रुतोनां प्रसिद्धेस्तद्व्यवहृतशब्दसमुच्चयमनुकरणेन शास्त्रान्तरनिर्मातॄणां रचनाशैली व्यपदिष्टा लक्ष्यते, यथा-रामायणे काण्डशब्दो यजुर्वेदस्य कण्डिकाशब्दान्, महाभारतस्य पर्वशब्दः सामवेदस्य पर्वशब्दात् पुनः पुराणानामध्यायशब्दश्च यजुर्वेदादेवानुवृत्ताः । किन्तु चिन्तनीयोऽयं विषयो यत् समग्रमहाभारतग्रन्थे प्रतिपर्वणि गीतामन्दाकिन्यामष्टादशाध्यायिन्यां योगशब्दप्रयोगस्य किं किं शास्त्रीयतत्त्वमन्तर्निहितमास्ते ?

पूर्वः, उत्तरः, यथा-तथा इत्यादिशब्दानां व्याकरणशास्त्रे आपेक्षिकशब्दत्वेन यथैव प्रसिद्धिर्लभ्यते प्रकरणगतस्य योगशब्दस्य आपेक्षिकशब्दत्वेन 'क्षेम' इति शब्दस्य गीतायां प्रयोगोऽस्ति । एवं तर्हि योगशब्दस्य शास्त्रान्तरप्रयोगः कीदृशः ? यथा–

दिवा वक्तव्यता पाले रात्रौ स्वामिनि यद्गृहे ।
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥
(मनुः ८।२३०)

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्पयेत्तथा ॥
(याज्ञवल्क्य : १।१००)

अलब्धलाभे योगः लब्धस्य परिपालनं क्षेमस्तदर्थमुपेयादुपासीत । (मिताक्षरायां विज्ञानेश्वरः १।१००)

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।
(गीता-९।२२)

तट्टीकासु च-योगः अप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणमिति ।
(शङ्करभाष्यम् ९।२२)

योगः अप्राप्तस्य प्रापणं क्षेमस्तस्यैव प्राप्तस्य संरक्षणम्
(नीलकण्ठीव्याख्या)

"अलब्धस्य प्रापणं योगः, लब्धस्य परिपालनं क्षेमः"
(भाष्योत्कर्षदीपिका)

अलब्धस्य लाभं लब्धस्य परिरक्षणं च शरीरस्थित्यर्थं योगक्षेममकामयमानानामधिवहामि। (मधुसूदनीव्याख्या)

योगं धनादिलाभं क्षेमं प्राप्तभगवत्स्वरूपप्रतिष्ठालाभ-परिरक्षणम्। (अभिनवगुप्तव्याख्या)

अत एव निष्कर्षस्त्वियं—"अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया"। अलब्धसम्प्राप्तिर्योगनाम्नाभिहिते कुतोऽस्य प्रयोग इति चेदुच्यते-"आमृत्योः श्रियमन्विच्छेत्" इति मनुस्मरणात् मरणावधि मनुष्यस्य कामनास्थितेः श्रीरेव काम्यत्वेन ग्रहणीया स्यात्। पुरुषार्थचतुष्टयेषु धर्ममोक्षौ साध्यत्वेन अर्थकामौ साधनत्वेन च शास्त्रीयविधानतो विनियुक्तौ स्याताम्। कामपुरुषार्थस्य मूलत्वेन या श्रीः सैव धममोक्षाभ्यां प्रवर्त्तते। अतः अप्राप्तपूर्वायाः श्रियो विधिवत्काम्यमूलत्वेन प्राप्तत्वाद् "अपूर्व-विधि"रत्र मीमांसकानाम्। (यः विधिरत्यन्ताप्राप्तमर्थं प्रापयति स अपूर्वविधिः) (मीमांसापरिभाषायां कृष्णयज्वा,

पुनः गीतायां क्षेमशब्दस्यापि प्रयोगोऽस्ति यस्तु पूर्वतः प्रदर्शितः। अयं हि क्षेमशाब्दीयविपाकत्वेन मूकमात्रश्लोकः गीतायां लभ्यते।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच॥ (१८।६६)

सर्वेन्द्रियजन्यलौकिकविप्रतिपत्तिनिष्ठकर्ममूलत्वप्रतिपाद-सकधर्मसमुच्चयानां व्युदासकरणे आत्मनिष्ठत्वसम्प्राप्ति-भूतस्वामिषुतैकान्तिकमनोनिश्चलत्वमत्रैव "सर्वधर्मान् परित्यज्य" इति श्लोकांशस्य योगशब्दमूलभूतापूर्वसम्प्रापकत्वं प्रकाशयति। तदनन्तरं तस्याः क्षेमकृत् परिपालकत्वेन वा आत्मनिष्ठत्वजन्यानन्याश्रयचित्तवृत्ति भगवद्व्यपदिष्टा भवति।

अतः कोऽलब्धः, कथमस्य सम्प्राप्तिः, केन प्राप्तुं युज्यते, को वा सम्प्रापकः? 'युक्तिस्त्वियं मीमांसानुसारं संसाधितव्या' "स्वाध्यायोऽध्येतव्य" इति वाक्ये वेद एव पठनीय इति नित्यत्वेन बोधो' भवति, यद्यपि वेदपाठप्रारम्भसमये "कथं पठनीयः, कुतः पठनीयः, किमस्त्यत्र? इत्येतादृशः पृच्छाः भवन्ति, तर्हि वेदस्त्वलब्धो भवेत्। यथैव शिशुः 'अ' इति विद्यारम्भे उच्चैर्गायति, किन्तु न जानात्यसौ किं फलमनेनैव। यदा तस्य व्युत्पत्तिः सञ्जायते, तदानीमेवावगन्तु शक्यते। अतः यथैव वेदज्ञानोद्भयात्प्रागेवालब्धस्तु वेदः, पुनः याथार्थ्येनावगमनं तस्य सम्प्राप्तिः अधिकृज्ज्ञानानुसारं क्रियमाणस्य कर्मणः सम्प्रापकत्वेन वक्तुं युज्यते। अत आह—

जगन्स्थितैरेव नृभिर्मुहुर्मुहु—
र्भवेत्कृतं कर्म विचिन्तयन्न वा
पतेदवश्यं हि विपत्पथे यदा।
तदा भवेत्तस्य च कर्म रक्षकः॥

तथैव गीतायाः प्रातिस्विकाध्यायप्रारम्भे अध्यायानामलङ्कारत्वेन योगशब्दस्य प्रयोगात् (विषादयोगः, साङ्ख्ययोगः, मोक्षयोगः) अवगन्तुमायाति यत् अध्यायोऽयम् अलब्ध आसीत्, सम्प्रति पठितुमुद्योगिनां कृते लब्धोऽयम्। अतः अलब्धस्य सम्प्राप्तिः 'योग' इति। पठनानन्तरं रक्षणमर्थात् व्यपदेशानुसारं व्यपदिष्टः सन् तत्परिपालनमेव क्षेम इति। एवं क्रमेण सर्वेषामध्यायानां योगशब्दस्य त्वियं तर्कणा। क्षेमशब्दः परिपालनार्थे यदि वोपयुज्यते, तर्हि प्रत्यध्यायं योगशब्देन साकं कथम् क्षेमशब्दप्रयोगो नाभूत् इति चेत् कर्मानन्तं कर्मफलविपाकस्तु निश्चितः। किन्तु फलप्राप्तिकारणीभूतकर्मानुष्ठानस्य यथा योग्यताऽप्राप्तेः फलसम्प्राप्तिर्न भवति यथैव, तथैवाध्यायगतप्रसङ्गोपलब्ध्ययोगहेतुत्वात् तद्विषयास-न्निविष्टाः विलोकयन्ते केचिदितिकारणात् क्षेमशब्दस्य वारणमिति युक्तम्।

परंब्रह्मणो ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा अजायन्त। एषां पालकत्वेन क्षत्रियस्य जीवनधारणाय च वैश्यस्य आवश्यकता अधिकतरा। लब्धस्य परिपालनं क्षेम इति प्रसंगात् ब्राह्मणेनादृष्टं क्षत्रियेण दृष्टं राज्यं समृद्धं प्रत्यक्ष रक्षकत्वेन परिपालयितुं वैश्यस्य व्यपदिष्टत्वे सति (कृषिकर्मणाऽन्नोत्पत्तिकारणात्) तस्य कृते सर्वत्र क्षेमशब्दस्य बहुल प्रयोगः शास्त्रान्तरेषु लभ्यते। मनुनोक्तम्—

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च (२॥१२६)

गीतायां योगशब्दमिमं मिश्रणार्थे व्यवहरन्ति केचित्, केचित्तु कथयन्ति परमात्मनि जीवस्य लीनप्रसङ्गो योग इति। भवतु नाम। शब्दानामनेकार्थत्वात् योगशब्दस्यार्थस्तु अन्यः कश्चिद् भवितुमर्हति चेन्नास्ति विप्रतिपत्तिः। किन्तु प्रासङ्गिकस्तु सज्जनग्रहणीयः। अतः सर्वसम्वित्श्रुतिसागरं (सर्वज्ञानमयोहि सः-मनुः २) धावन्तीनां स्मृतितरङ्गिणीनां दृढप्रामाणिकता पूर्वाचार्यैः स्वीकृतायाः हेतोः शास्त्रान्तरशब्दप्रसिद्धचा स्मृतिशब्दप्रसिद्धिर्नो लङ्घनीयेत्यलं बहुना।

पूर्वतोनुवृतम्

# कर्ममीमांसादर्शनम् : क्रियापादः

आविष्कर्त्ता तथा भाष्यकारः
भगवत्पूज्यपादमहर्षियोगिराजस्वामिज्ञानानन्दमहाराजः

देवाः ! मनोमयः कोषः कोषः प्राणमयस्तथा ॥
विज्ञानमयकोषोऽपि सम्भूयैतत्त्रयं सह ॥
शरीरं प्राणिनां सूक्ष्मं समुत्पादयते तराम् ॥
शरीरं सूक्ष्ममेवाहो दशामेत्यातिवाहिकीम् ।
अधिलोकान्तरं सर्वं शक्नुयाद् भ्रमितुं सुराः ॥
कारणाख्यवपुर्भूताऽविद्यायां नन्वस्थितः ।
प्रियमोदप्रमोदैर्हि भावैरेभिः समन्वितः ॥
आत्मस्वरूपावरको देवा ! मलिनसत्त्वकः ।
नाम्नाऽऽनन्दमयः कोषः कथ्यते वेदपारगैः ॥इति १६६॥

उद्भिद्यन्नमयविकाशः ॥१६७॥

चतुर्विधभूतसंघपारस्परिक सम्बन्धप्रदर्शनार्थमुच्यते — उद्भिदि गुल्मलतावृक्षादौ अन्नमयस्य कोषस्य विकाशो भवति। उद्भिज्जजीवेष्वपि विद्यन्ते पञ्चकोषाः, यतः पञ्चकोषासद्भावे न सिध्यति जीवत्वं जीवस्य किन्तु तेषु केवलमन्नमयस्य कोषस्यैव सम्यग् विकाशो जायते। अन्ये कोषा गौणरूपेण तेषु तिष्ठन्ति ॥१६७॥

तदेवं सिद्धान्तयति—

तत्पिण्डखण्डान् नवपिण्डोत्पत्तिः ॥१६८॥

तत्पिण्डखण्डत नवपिण्डस्योत्पत्तिर्जायते। अतएव उद्भिज्जपिण्डस्य छिन्ना शाखा अन्यत्र विरोपितुं शक्यते। तेन च नववृक्षस्य प्रादुर्भावो भवति ॥१६८॥

एवं च—

अन्नप्राणमययोः स्वेदजे ॥१६९॥

स्वेदजश्रेणीषु जीवेषु प्रधानरूपेण अन्नमयप्राणमययोः कोषयोः विकासो वेदितव्यः। अन्ये कोषास्तत्र गौणरूपेण तिष्ठन्ति॥१६९॥

तदीयशक्ति वर्णयति—

उद्भिज्जजननार्हत्वमप्यस्यातः ॥१७०॥

अतःकारणात् स्वेदजस्य उद्भिज्जजननार्हत्वमपि दृश्यते। स्वेदजजीवेषु अन्नमयप्राणमयकोषविकासकारणात् कुत्र कुत्रचिदेवमपि दृश्यते यत् स्वेदजाङ्गेषु उद्भिज्जत्वलक्षणमपि विद्यमानं दृश्यते। कश्चित् स्वेदजो जीवः एवमपि दृश्यते यत् तदीयमर्धाङ्गे स्वेदजमुद्भिज्जं च। वस्तुतः एतादृशस्वेदजे द्वौ जीवौ विद्यमानौ भवतः। उद्भिज्जेऽपि उद्भिज्जप्रादुर्भावः। यथा परगाछानामको वृक्षः। एवं विज्ञातव्यम्—यत् परगाछानामकोऽपि एकः स्वतन्त्र उद्भिज्जो जीवः। तस्य बीजानि पक्षिभ्रमरादिद्वारा आनीय दुर्बलवृक्षकोटरादिषु स्थापितानि अङ्कुरोत्पत्ति जनयन्ति, तदङ्कुराः परिवर्धन्ते च। वस्तुतः परगाछावृक्षः तद्वृक्षतो नोत्पद्यते। स्वेदजेऽपि द्वयोर्जीवयोर्लक्षणं दृश्यते। तौ द्वौ जीवौ स्वतन्त्रौ भवतः। विषयोऽयं योगिजनवेद्यः। कुत्रचन यन्त्रसाहाय्येनापि द्रष्टुं शक्यते। १७०॥

अण्डजे कस्य कोषस्य विकास इति निरूप्यते—

अण्डजेऽन्नप्राणमनोमयानाम् ॥१७१॥

अण्डजजीवेषु अन्नमयप्राणमयमनोमयानां त्रयाणाम् कोषाणाम् विशेषरूपेण विकासो जायते। शिष्टौ द्वौ कोषौ गौणरूपेण तिष्ठतः ॥१७१॥

एतस्य विशेषत्वमुपवर्ण्यते—

तस्मात्ततः स्वेदजोद्भिज्जजीवा अपि ॥१७२॥

तस्मात् कारणात् ततः अण्डजात् स्वेदजोद्भिज्जजीवा अपि उत्पद्यन्ते। अण्डजश्रेणोजीवानां शरीरेषु कुत्रचित् उद्भिज्जस्वेदजयोर्जीवयोरपि उत्पत्तिर्दृश्यते। यदा उत्तरोत्तरम् उन्नतिशीलाः त्रयः कोषा यत्र देहे पूर्णताम् प्राप्नुवन्ति तत्र निम्नस्य कोषद्वयस्य विकासशालिनो जीवाः अपि समुत्पद्यन्ते, युक्तिसंगतं चैतत्। अत्र शङ्कते, स्वेदजजीवाः प्रायः दर्शनेन्द्रियगोचरतां नापद्यन्ते, परन्तु उद्भिज्जजीवाः प्रत्यक्षतो दृश्यन्ते। ते लघुकाये अण्डजजीवे कथमुत्पन्ना भवितुमर्हन्तीति? समाधत्ते—उद्भिज्जजीवा बहवो यथायथं दृष्टिगोचरतां न प्राप्नुवन्ति। यत्र कश्चिदुत्पद्यते, तत्र पूर्वं न किंचिदपि दृश्यते किन्तु निम्नश्रेणिरुद्भिज्जः प्राकट्यमासादयति। किञ्चिद्दिनानन्तरं स प्रत्यक्षतो दृश्यते। एतादृशा निम्न श्रेणयोऽनेके उद्भिज्जजीवा अतिसूक्ष्मा भवन्ति। ते अन्यजीवशरीरेष्वपि समुत्पत्तुं शक्नुवन्ति। अतः किल अण्डजशरीरे उद्भिज्जस्वेदजजीवयोः समुत्पत्तिर्न भवितुमर्हतीति युक्तिविरुद्धा ॥१७२॥

जरायुजशरीरे केषाम् कोषाणां विकास इति निर्णीयते—

जरायुजेऽन्नप्राणमनोविज्ञानमयानाम् ॥१७३॥

जरायुजश्रेणीजीवेषु अन्नमय-प्राणमय-मनोमय-विज्ञानमय कोषाणां पूर्णविकासो जायते। परन्तु आनन्दमयकोषो गौणरूपेण तिष्ठति ॥१७३॥

तद्वैशिष्टयं निदर्शयति—

अतस्ततोऽण्डजस्वेदजोद्भिज्जाश्च ॥१७४॥

अतो हेतोर्जरायुजजीवात् अण्डजस्वेदजोद्भिज्जजीवानाम् उत्पत्तिर्दृश्यते। अन्यतमस्य समुन्नतकोषस्य विकासेन हेतुना जरायुजश्रेणोजीवशरीरे उद्भिज्जस्वेदजाऽण्डजानां त्रयाणामपि जीवानाम् आश्रयो न विज्ञानविरुद्धः ॥१७४॥

सम्प्रति मनुष्यशरीरमुद्दिश्य व्याख्याति—

सर्वप्राणिप्रसवो मानवः पूर्णत्वात् ॥१७५॥

मानवशरीरं सर्वतः परिपूर्णम्, अतः तस्मात् सर्वप्राणिसमुत्पत्तिः। मानवपिण्डं सर्वशरीरश्रेष्ठत्वात् परिपूर्णं समाम्नातम्। अतस्तद्वैशिष्ट्यकारणात् इदं वक्तुं शक्यते यत् मनुष्यशरीरे अन्ये सर्वे निम्नश्रेणयो जीवाः आश्रयमधिकर्तुं

शक्नुवन्ति । मानवशरीरे दद्रुप्रभृतिरोगरूपेण उद्भिज्ज-जीवानाम्, चर्मणि रक्ते च बहुविधरोगकोटाणुस्वरूपस्वेदज-जीवानाम्, बहिर्लोमकूपेषु आभ्यन्तरिकविष्ठादिषु अण्डज-जीवानाम् सृष्टिर्जायते । जरायुजसर्गस्य पूर्णापूर्णसर्वविध-सृष्टीनां मानवपिण्डम् आकर एव । दूषितेन मनसा मानवपिण्डा-श्रयेण मलिनमलिना समुन्नतेन मनसा समुन्नता सृष्टिर्मानव-पिण्ड एव सम्भवा । मानवपिण्डं पञ्चभिः कोषैः पूर्णावयवम् । अतो ज्ञानानन्दपरिपूर्णतापि मानवपिण्ड एव सम्भवति । स्वकीयायाः असद्धारणाया पूर्णतया मानवः पशुर्भवितुं शक्नोति । सद्धारणायाः परिपूर्णतया देवोऽपि भवितुमर्हति एतदेव मनुष्यपरिपूर्णतावैचित्र्यम् ॥१७५॥

पञ्चकोषपरिपूर्णमानवशरीरस्य विशेषान्तरं निर्दिशति-

पिण्डेश्वरोऽसौ ॥१७६॥

असौ मानवो जीवः पिण्डस्य ईश्वरो भवति । उद्भिज्जादि सहजपिण्डजीवो न कदापि पिण्डेश्वरः, असम्पूर्णत्वात् । तेषु यथाक्रमम् एकैककोषाधिकविकासो जायते, तच्च पूर्वोक्तमेव । वस्तुतः तेषु पञ्चकोषाः विराजन्ते, यतः सर्वेष्वपि जीवेषु सर्वकोषाणां सर्वेन्द्रियाणां च लक्षणानि विद्यन्ते । परन्तु पूर्वोक्तविज्ञानमनुसृत्य यथाक्रमं कोषाणाम् असंपूर्णता अवश्यं तिष्ठति, अतस्ते असम्पूर्णपिण्डाधिकारित्वात् स्वपिण्डाधीश्वरा न भवितुमर्हन्ति । सर्वप्रकारपरिपूर्णत्वात् मानवो जीवः स्वपिण्डस्याधीश्वरो नूनं भवति । विशेषतो मानवो देवत्वमधिगच्छति मोक्षाधिकारी च जायते । अतो मनुष्यः स्वपिण्डेश्वर इत्यत्र नास्ति सन्देहावसरः ॥१७६॥

अन्यदपि माहात्म्यं तस्य निर्दिशति--

अत ऐशीविकाशार्हत्वमस्य ॥१७७॥

अतः कारणात् तत्र ऐशोनां शक्तीनां विकासः । मानवपिण्डस्य वैशिष्ट्यमुपवर्ण्य आधिभौतिक विशेषतारूपपिण्डेश्वरत्ववर्णनान्तरम् आधिदैविकविशेषता निरूप्यते । मनुष्यशरीरे तपोयोगबलेन विविधानाम् दैवीनाम् ऐशीनां शक्तीनां विकासो जायते । परकायाप्रवेश--दूरश्रवण--दूरदर्शनप्रभृतयो दैवशक्तयः अणिमलघिमादय ऐशविभूतयोऽपि तत्र विकसन्ति । वस्तुतस्तु आध्यात्माधिदैवाधिभूतसहजाख्यानां चतुर्विधश्रेणीसिद्धीनां विकासस्थलं मनुष्यशरीरमेव इत्यत्र नास्ति सन्देहः । एतदेव तद्वैशिष्ट्यम् । भगवान् पतञ्जलिरप्याह:--"जन्मसंस्कार मन्त्रौषधिसमाधिजाः सिद्धयः" इति ॥१७७॥

अन्यदप्युच्यते--

निःश्रेयसाधिगमश्च ॥१७८॥

अतः कारणात् मनुष्येण निश्रेयसः अधिगम्यते । आध्यात्मिकी विशेषता प्रतिपाद्यते । मानवपिण्डे एव निःश्रेयसः प्राप्यते । मृत्युलोकः कर्मभूमिः स एव चतुर्दशभुवनानां केन्द्रमपि । मृत्युलोके एव मनुष्यत्वप्राप्तेरनन्तरं जीवो देवत्वमासाद्य ऐशकर्मसहायतया क्रमशः त्रिमूर्तिपदं प्राप्य ब्रह्मीभवति, अथवा जैवकर्मसाहाय्येन शुक्लगतिद्वारा सूर्यमण्डलं भेदयन् विमुच्यते । सहजगत्या तु मानवशरीरे एव जीवो मुक्तिमासादयति, मानवपिण्डस्य एतत् विशिष्टं माहात्म्यम् ॥१७८॥

प्रकारान्तरेण महत्त्वं निर्दिशति—

लौकिक्यलौकिकी च शक्तिः ॥१७९॥

मानवशरीरे लौकिक्यलौकिकोति द्विवा शक्तिः समुत्पद्यते । मानवपिण्डस्य वैलक्षण्यमिदं यत् तत्र लौकिकी अलौकिकी चेति द्विविधा शक्तिर्विकसति । देवानाम् अधिकारो मनुष्यतः श्रेष्ठः, किन्तु ते यदि लौकिकं कर्म कर्तुं वाञ्छेयुः तर्हि तैः अत्रत्यं लौकिकं केन्द्रं नूनमवलम्बनीयम् । उदाहृत्यानया इदमभ्युपगन्तव्यं यत् कस्यचित् व्यक्तिविशेषस्य वधावसरे मेवस्थितवज्रद्वारा सर्पादिजीवप्रेरणया च ते वध-कार्यमनुष्ठातुं प्रभवः । एवं हि कस्यचित् कल्याणसम्पादनावसरे अन्येषाम् अन्तःकरणे त्वदीयान्तःकरणे या प्रेरणया तत्कल्याणं कर्तुं शक्यम् । देवाः प्रकारान्तरेण मनुष्यदेह-

नेन्द्रियगोचरस्थूलशरीराणि धारयन्तोऽपि स्थूलशरीरसाध्यं सर्वं लौकिकं कार्यं न यथावत् कर्तुम् पारयन्ति । किन्तु मनुष्ये द्विविधा योग्यता विद्यते । योगशक्तिद्वारा मानवो मारण-मोहनवशीकरणोच्चाटनादिकार्यं तथा च लौकिक-रूपेण अन्यदपि कार्यजातं कर्त्तुं शक्नोति । संयमद्वारा दैव-कार्यं, लौकिकपुरुषार्थद्वारा लौकिकं विधेयमपि विधातुं शक्नोति ॥१६९॥

अन्यच्चाभिधत्ते —

लौकिकमलौकिकञ्च प्रत्यक्षम् ॥१८०॥

मानवे लौकिकम् अलौकिकं च प्रत्यक्षम् । मनुष्येभ्यो निम्नयोनिषु लौकिकप्रत्यक्षोपयोगिदर्शनेन्द्रियाणि । मनुष्यो-परिस्थदेवादियोनिषु अलौकिकदिव्यप्रत्यक्षसाधनानि । किन्तु सर्वपिण्ड-मध्यवर्त्तित्वात् अधिकारस्वातंत्र्ये विचारदृष्टे सर्वाधिकत्वात् मनुष्येषु लौकिकालौकिकोभयप्रत्यक्षशक्ति-र्विद्यते । मनुष्यः साधारणतया स्वीयनेत्रगोलकसाहाय्येन अथवा अण्वीक्षण-दूरवीक्षणादियन्त्रसहायतया बहूनाम् अपि स्थूलपदार्थानां प्रत्यक्षीकरणे समर्थः स्वीययोगशक्त्या नैजं तृतीयं ज्ञाननेत्रम् उदघाट्य अलौकिकं प्रत्यक्षम् एतावद् वर्ध-यति यत् सर्वातीतस्य भगवतोऽपि दर्शनं कर्त्तुं समर्थः । अलौकिकप्रत्यक्षयुक्तयो योगदर्शने सांख्यदर्शने च समीचीन-रीत्या पूर्वाचार्यैः सुनिरूपताः ॥१८० ।

प्रसंगतो योनिषु आश्रयस्थलनिर्णयं करोति—

उद्भिज्जमर्त्यौ जीवाश्रयौ ॥१८१॥

सर्वप्रकारयोनीनाम् आश्रयसम्वन्धविचारे क्रियमाणे इदमेव निश्चितं यत् उद्भिज्जमनुष्ययोनी सर्वविधयोनीनाम् आश्रयस्थलरूपे । उद्भिज्जयोनीनाम् आश्रयेण मनुष्य-लोकस्य अन्याः सर्वाः योनयो जीवनं धारयन्ति । उद्भि-ज्जानाम् आत्मसमर्पणेन ये मृगा जीवन्ति तेषाम् एव नाशेन व्याघ्रप्राणरक्षा मनुष्यपर्यन्तं: प्राणिनो मनुष्यलोके स्थापित मृत्युलोकः उद्भिज्जानाम् सहायतया स्थितिशीलः । मनुष्याणां साहाय्येन चतुर्दशभुवनानि सुरक्षितानि । मनुष्यस्यासद्भावे मृत्युलोकसुव्यवस्था न स्यात् । मनुष्यलोकाभावे प्रेतनर-कादिलोकानाम् आवश्यकत्वं न भवेत्, उच्चदेवलोकानां सम्वर्धनमपि न जायेत । यतः यज्ञद्वारा देवाः संवर्ध्यन्ते मानवाभावे देवास्तित्वसंरक्षणमप्यसम्भवम् । यतो मानवा एव कालान्तरे देवत्वमासादयन्ति ॥१८१॥

तदीयो हेतुरुच्यते—

अवधिद्वैविध्यात् ॥१८२॥

जीवप्रवाहस्य द्वे परिधी । एका उद्भिज्जसम्बन्धिनी, द्वितीया मनुष्यसंबद्धा । उदभिज्जतः प्रवहमानः प्रवाहः जीवनमुक्त विलीयते मुक्तेः सर्वविधा अपि अवस्थाः मनुष्ययो-निसापेक्षाः । अन्यच्च चिज्जडग्रन्थि, प्रथमदशा जीवावस्थारम्भ इति यावत् उद्भिज्जयोनितः सम्बन्धं रक्षति । अतः उद्भिज्जो मानवश्च योनिद्वयमिदं जीवप्रवाहस्य परिधिद्वयमित्यत्रनास्ति सन्देहः ॥१८२॥

शङ्कां समाधत्ते –

जीवत्वजनिरुद्भिदः ॥१८३॥

उद्भिदः उद्भिज्जीवा जीवभावस्य उत्पत्तिस्थानम् । अत्र जिज्ञासुः शङ्कते यत् जीवत्वप्रारम्भिको परिधिः किम् उद्भिज्जभिन्ना भवितुं नार्हति ? ह्रसन्ता वर्धमानाश्च अनेके पदार्थाः कथं न परिधिभूताः ? इत्यादि शङ्कासमाधानार्थमेव पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविरभावयत् । सूत्रेणैतेन इदं निर्णीतं यत् उद्भिज्जत एव जीवत्वप्रारम्भः । यतोहि पञ्चकोषाणां ज्ञानेन्द्रियाणां च विकासलक्षणमुद्भिज्जपिण्डे एव प्रकटीभवति । स्मृतिशास्त्रेऽपि निर्णीतम्—

उष्णतो म्लायते वर्णं त्वक् फलं पुष्पमेव च ।
म्लायते शीर्यते चाऽपि स्पर्शस्तेनाऽत्र विद्यते ॥
वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्यते ।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ॥

वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति।
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः॥
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥
पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात्।
व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे॥
वक्त्रेणोत्पलनालेन यथोर्द्ध्वं जलमाददेत्।
तथा पवनसंयुक्तः पादैः पिबति पादपः॥
सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात्।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥१८३॥

विज्ञानमिदं पुनः परिपोषयति—

परिणमत्स्वपि न प्रस्तरादिषु॥ १८४॥

प्रस्तरादिषु परिणमत्स्वपि तेषु जीवत्वं नास्ति। अत्र शङ्कते—प्रस्तरादिपदार्थान् वर्धमानान् विलोक्य कथं न तत्र जीवत्वस्वीकारः? समाधत्ते—कुत्रचन बालुकाभिर्मृत्तिकाभिः, आग्नेयपर्वतप्रस्रवणनिर्गलितपदार्थेभ्यः प्रस्तराणि समुद्भवन्ति, तानि च परिवर्धमानानि विलोक्यन्ते। सुवर्णरौप्यहीरकमाणिक्यरत्नादयो हरितालप्रभृत्युपधातवश्च नूनं परिवर्धन्ते। किन्तु सर्वेषां तादृशपदार्थानां निर्माणं परिवर्धनं च न जीवपिण्डसमानम्। तेषु परिणामेनैव वृद्धिर्जायते। वैद्युतिकशक्तेः तादृशप्राकृतिकस्थूलशक्तिविशेषतरंगाणां प्रभावात् तत्तत्पदार्थनिकट-परमाणुपंचतत्त्वसहायतया तेषु तेषु पदार्थेषु परमाणवो वृद्धिमुपयान्ति, तेन कारणेन ते ते पदार्थाः क्रमशः परिवर्धन्ते। मानवसहजादिपिण्डेषु प्राणमयकोषसाहाय्येन अन्नस्य च सहायतया यथा अन्नमयः कोषो वर्धते न तथा तेषु पदार्थेषु। पूर्वोक्तरूपेण यादृशज्ञानेन्द्रियलक्षणानि उद्भिज्जेषु दृश्यन्ते न तथा प्रस्तरादिपदार्थेषु। अतः कारणात् प्रस्तरादिषु जीवत्वशंका युक्तिविज्ञानविरुद्धा प्रस्तरादिपदार्थेषु समष्टिरूपेण अधिदैवसद्भावो नूनम्, नदीसमुद्रादिषु यथा अधिदैवरूपेण देवताविशेषः तथैव पर्वतप्रस्तररत्नधातुविशेषेषु पृथक्-पृथक् देवाः अधिदैवरूपेण विराजन्ते, प्रत्येक ब्रह्माण्डे तत् सामञ्जस्यसंरक्षणं विदधते च॥ १८४॥

अन्यच्च—

तच्छक्तिमत्त्वमधिदैवसम्पर्कात्॥ १८५॥

अधिदैवसम्बन्धेन तेषां शक्तिमत्त्वम्। जीवत्वाभावे कथं तेषु असाधारणशक्तिविकास इति शंकासमाहितये निरुच्यते यत् जीवेषु पूर्वप्रपञ्चितसिद्धान्तानुसारम्। असाधारणशक्तीनां विकासो नूनं, परन्तु धातुरत्नप्रभृतिजड़भूतपदार्थसमूहेषु यः किल असाधारणशक्तिविकासः, स च तत्तत्पदार्थरक्षकाधिदैवसाहाय्येनैव सम्पद्यते। उदाहरणरूपेण विज्ञेयं यत् जलाग्निपर्वतादीनां स्वाभाविका गुणाः स्वभावत एव समुत्पद्यन्ते परन्तु तेषां द्वारा यथासमयं असाधारणशक्तिविलासः। यथा वायुद्वारा महावातप्रकोपः, जलद्वारा च घोरजलप्लावनादि कार्यं तद्तद्पदार्थसम्बन्धयुक्ताधिदैवसमीहाशक्तितः सम्बध्नन्ति॥१८५॥

प्रसंगत उच्यते—

चराचरे सप्तधातुनिमित्ताम्॥१८६॥

चराचरेषु सप्तधातवः स्थितेः कारणानि। प्रकृति-सहजात-सप्तविभागसम्भूताः सहज-कर्मसम्बन्धयुक्तसप्तधातवः स्थूलसर्गस्य स्थितेर्हेतुभूताः। स्थावरे सुवर्णलौहादयः जंगमे मांसरक्तादिसप्तधातवः, सुवर्णादिसप्तधातवः सर्वव्यापकाः सन्ति। तेषामेव परस्परसम्मेलनेन अनेके उपधातवो निर्मीयन्ते। सूक्ष्मदृष्ट्या सम्यक्तयेदं दृश्यते यत् पृथिव्याः सर्वत्र विभागे पृथिव्यन्तर्गतजलेऽपि सुवर्णादिसप्तधातूनां सम्मेलनं निभाल्यते, त एव सप्तधातवः प्रकारान्तरेण स्थावरपदार्थानां स्थितिकारणत्वं भजन्ते। यावत्किल प्रस्तरादिषु तेषां सप्तधातूनां सम्बन्धः, तावत् प्रस्तरादीनाम् अस्तित्वमपि। यद्यपि पदार्थविद्याद्वारापि तत्प्रत्यक्षसिद्धिर्न स्यात्, किन्तु सर्व...

स्थावरपदार्थेषु सप्तधातुविद्यमानता विज्ञानसिद्धा । तेषा सप्तधातूनां, क्षयेणैव प्रस्तरादीनां क्षयः समुत्पद्यते । तत् परमाणवश्च विकृष्टाः प्रणश्यन्ति । एवं हि मानवपिण्डादिषु रक्तमांसास्थिप्रभृति-सप्तधातवः तत्पिण्डस्थितिकारणतां व्रजन्ति । आयुर्वेदशास्त्रेण सर्वथा सिद्धमिदं यत् रक्तमांसादिसप्तधातूनां क्षये समुत्पन्ने मनुष्यशरीरं क्षीणतामापद्यते । सप्तधातुषु एकस्यापि क्षये जाते शरीरं प्रणश्यति । रक्तादि सप्तधातवः स्त्रीषु पुरुषेषु च समानाः सन्ति । स्त्रीषु केवलं वीर्यस्य विभागद्वयम्, अतएव आयुर्वेदाचार्या इदमामनन्ति यत् स्त्रीषु अष्टौ धातवः सन्तीति - वस्तुतः सृष्ट्युत्पादकं रजः कान्तिशक्तिवर्धकमिति सप्तमधातोर्विभागयं स्त्रीशरीरे वेद्यम् ॥१८६॥

द्वितीयं फलमभिधत्ते—

तेनोभयत्र परिणतिः ॥१८७॥

तेन हेतुना उभयत्र परिणामः सप्तधातुतो द्वितीयं किं फलमिति सहजकर्मगतिनिदर्शनार्थमुच्यते । स्थावरे जंगमे वेत्युभयत्र परिणतिः सप्तधातूनामेव कार्यम् ॥१८७॥

तदुदाह्रियते—

स्थावरे प्रस्तरादिकं जंगमे जरादिकम् ॥१८८॥

स्थावरे प्रस्तरादीनाम् जंगमे च जरादीनाम् परिणामः सप्तधा जनित एव । यदा किल बालुकाभिः मृत्तिकाभिर्वा प्रस्तराणि कंकरादयः अन्ये खनिजपदार्था वा जायन्ते तदा तादृशाः सर्वेऽपि परिणामाः पूर्वकथित सप्तधातूनां परिणामत एव सम्भवन्ति । अन्यच्च जंगमपिण्डेषु वृद्धत्व-स्थूलत्व-कृशत्वादयः परिणामाः पूर्वोक्तसप्तधातुपरिवर्तनसमुद्भूताः ॥१८८॥

तत्प्रधानहेतुरभिधीयते—

त्रैगुण्यात् ॥१८९॥

प्रकृतित्रैगुण्यकारणादेव स्थावरजंगमेषु सप्तधातुद्वारा परिणामा सम्भवन्ति । सप्तधातूनां स्थावरजंगमेषु [illegible] किं मौलिकं कारणम् ? सप्तधातूनां स्थितिकारणतायां सिद्धायां तद्द्वारा स्वतः परिणतिः कथं न एतादृश शंकासमाधानाय पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदम् आविष्कृतम् । वस्तुतः सप्तधातुद्वारा स्थावरजंगमेषु समुत्पद्यमानपरिणामस्य मौलिकं कारणं प्रकृतेस्त्रैगुण्यमेव । प्राकृतिकेषु स्वभावसिद्धा यदा एकस्यानन्तरम् अपरस्य समुदयो जायेत तदा गुणपरिणाममनुसृत्य धातुष्वपि परिणतिर्जायते, तया च स्थावरजंगमात्मकः परिणामः समुत्पद्यते ॥१८९॥

सम्प्रति स्थूलं कारणम् अभिधत्ते—

शक्तिप्राणतश्च ॥१९०॥

त्रिगुणद्वारा परिणामगतिर्नूनं संसाध्यते । आपरमाणोर्ब्रह्माण्डपर्यन्तं सर्वत्रैव बोभूयमानस्य सृष्टिस्थितिलयानां परिणामक्रमस्य मौलिको हेतुः त्रयो गुणा एव, किन्तु पदार्थानां स्थूलदशायां परिणामस्य गतिद्वयं समाम्नातम् । एका वास्तविकावस्थासंरक्षिणी, द्वितीया च रूपान्तरमनुष्ठाय संरक्षिणी । विज्ञानमिदं, सुस्पष्टमवधारयितुम् अवगन्तव्यं यत् समुत्पद्यमानं मानवशरीरं रजोगुणस्य, स्थितिशीलं सत्त्वगुणस्य नाशशीलं तमोगुणस्य च कार्यं वेद्यम् । पिण्डसृष्टिषु सर्वविधक्रियाणाम् उपरि विचारे क्रियमाणे नूनमेव तादृशाः परिणामा अवगन्तुं शक्यन्ते, किन्तु पिण्डस्य अस्तित्वदशायां शक्तिद्वयस्य प्राधान्यं अङ्गीकर्त्तव्यमेव । ते द्वे शक्ती रयिः प्राणश्च । श्रुतावप्युक्तम्—"तस्मै च होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेत्यतो मे बहुधा प्रजा करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिश्च रयिः मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत ऋषयः शुक्लम् इष्टं कुर्वन्तीतर इतरस्मिन् । अहोरात्रो वै प्रजापतिस्तस्यस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्त ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्रात्रौ रत्या संयुज्यन्ते ।"

यथा किल पूर्वमेव निर्णीतं, कार्यब्रह्मणः प्रत्येकस्मिन् अंगे त्रयाणाम् अपि गुणानां स्वाधीनाः साधारणक्रियाः सम्भवन्ति। एकस्य ब्रह्माण्डस्य पिण्डस्य समुत्पत्तिः, तत् पूर्णावस्थायां स्थितिः, पुनः—तन्नाशश्चेति तिस्रः क्रियाः त्रिगुणानुसारं साधारणरूपतः सम्भवन्ति। किन्तु पिण्डस्यैकस्य ब्रह्माण्डस्य वा प्रारम्भदशा नाशावस्था च सृष्टि-वैभव-प्रकाशानुपयोगिनी। तदर्थं केवलं पिण्डब्रह्माण्डयोर्मध्यावस्था या पूर्णावस्था, सैवोपयोगिनी। तदीयपूर्णावस्थायां तदस्तित्वसंरक्षणीय यत् प्रतिक्षणव्यापि स्थितिमूलकं परिणामकार्यं, तत्र उभयोरेव रयिप्राणयोरुपयोगिता। प्रकारान्तरेण रयिः स्वभावतः परिणामिषु भूतेषु यथायोग्यं परिणामं समुत्पाद्य तद् रक्षां विदधाति। प्राणश्च तत्र जीवनिकाम् शक्ति समुत्पाद्य तद्रक्षणं विधत्ते। इमामेव द्विविधां प्रक्रियां अवलम्बमानाः भक्तिमार्गस्य आचार्या एवमभिदधते यत् सृष्टौ समुत्पन्नायां सत्यां भगवतो ब्रह्मणः कार्यं समाप्येत भगवतः शिवस्य विष्णोश्च कार्यं चिरस्थायि तिष्ठति। इमामेव वैज्ञानिकीं भित्तिमनुसृत्य भगवतो ब्रह्मणः पूजनं पुराणैर्नाधिकमुदीरितं केवलं तदीयशक्तिरूपिण्याः वेदमातुः समर्चा समधिकमुपवर्णिता। एको देवः केशवो वा शिवो वा इत्युक्त्वा विष्णुशिवयोः समधिकपूजनं प्रचारितम्। अतः रयिप्राणयोः रहस्यं सृष्टेरस्तित्वेन सह मौलिकरूपेण सम्बन्धितमित्यत्र न सन्देहः। रयिमवगन्तुम् अन्नस्य उदाहरणं समुचितम्। अन्नं किल स एव पदार्थः यस्य भक्षणेन मनुष्यो जीवति। वृक्षस्यापि अन्नं तदेव उदाहारतो वृक्षो जीवितः तिष्ठति। अन्नस्य उदरस्थितिः तस्य परिपाकः, तेन च सर्वधातूनां परिपोषणम् इति सर्वं परिणाम-जनकमपि रक्षामूलकम्। ब्रह्माण्डपिण्डयोरस्तित्वसंरक्षणहेतुः प्राणशक्तिरेव। प्राण एव जीवनशक्तिः। रयिप्राण्योः परस्परं क्रियासाहाय्यमपि। तत्साहाय्यं परिणामजनकमपि रक्षामूलकमवमन्तव्यम्॥१९०॥

प्रसङ्गो द्वन्द्वविज्ञानं विवृणुते—

उद्भिदादयो नाशका पोषकाश्च ॥१९१॥

उद्भिदादयो जीवस्य नाशकाः परिपोषकाश्च भवन्ति। द्वन्द्वक्रियाया स्वाभाविकता समीचीनरीत्या पूर्वमेव समुपवर्णिता। तमेव मौलिकं नियममनुसृत्य सर्वत्रैव द्वन्द्वशक्तेः विद्यमानतया उद्भिज्जादिषु अमृतस्य विषस्य चेति क्रियाद्वयं परिदृश्यते। विषवृक्षः- आम्रादयः अमृतवृक्षाश्च उद्भिज्जेषु रोगघ्नाः रोगोत्पादकाश्च कीटाणवः स्वेदजेषु, मयूरसर्पादयः अण्डजेषु, गोव्याघ्रप्रभृतयो जरायुजेषु च। एभिरुदाहरणैः चतुर्विधभूतसंघेषु द्विविधशक्तिस्थायिताप्रमाणमुपलभ्यते। एष किल सृष्टेः स्वाभाविको नियमः॥१९१॥

इदानीम् प्रकृतिविषयं अभिद्धातित्—

कर्मापि द्वन्द्वधर्मं द्विविधशक्तिमत्वा ॥१९२॥

द्विविधशक्तिमत्वात् हेतोः कर्मापि द्वन्द्वधर्मविशिष्टम्। इदं तु प्रतिपादितपूर्वं यत् प्रकृतिस्पन्दनेन समुत्पन्नं शक्तिविशेषं कर्म प्रोच्यते। यदि कर्मशक्तिविशेषं तर्हि तत् उभयत्र प्रवाहशीलं भवेत्। प्रत्येकशक्तेः स्वभावोऽयं यत् सा उत्तरवाहिनी दक्षिणप्रवाहिनी ऊर्ध्वमधश्च प्रवहणशीला भवितुमर्हति। यदा कर्म सत्त्वगुणमाश्रयत् पुण्यमयं स्रोतो धारयति तदा तत् ऊर्ध्वगामि, यदा च तमोगुणमाश्रयत् पापस्रोतः प्रवाहयति तदा तत् अधोगामि प्रणिगद्यते। कर्मणो द्वन्द्वमिदं स्वभावसिद्धम्॥१९२॥

द्वयोः किं सेवनीयमित्युच्यते—

सेव्यं सुकृतमभ्युदयनिमित्तत्वात्॥१९३॥

अभ्युदयस्य कारणभूतत्वात् पुण्यं कर्म सेवनीयम। यदि कर्मणः स्वाभाविकद्वन्द्वतया धर्माधर्मौ उभौ एव प्राकट्यमासादयतः, तर्हि द्वावेव कथं न सेवनीयौ? इति शंका-समाहितये सिद्धान्तपरिपोषणाय च एतत्सूत्राविर्भावः। नास्त्यत्र सन्देहो यत् प्राकृत द्वन्द्वतया जीवस्य सर्वाण्यपि कर्माणि श्रेणीद्वयेन विभक्तुं शक्यते। ऊर्ध्वगामिकर्म धर्मः, अधोगामि च अधर्मः। शक्तिविचारतो उभयमपि समानमेव।

यतो धर्मः, प्रथमावस्थायाम् ऐहलौकिकमभ्युदयं द्वितीयावस्थायां पारलौकिकमभ्युदयं, तृतीयदशायां च अभ्युदयं सम्पादयन् उन्नतेः परां काष्ठां ब्रह्मपदं प्रापयति। अयं किल धर्मशक्तेः प्रबलतायाः संक्षिप्तो दृष्टान्तः। अन्यच्च अधर्मोऽपि धर्मतो नाल्पशक्तिविशिष्टः। अधर्मो हि जीवं प्रेतत्वं नरकत्वं, स्थावरत्वमपि प्रापयितुं शक्नोति। अधर्मः अधोगामिनीं प्रवृत्तिं परिवर्धयन् जीवम् अतिनिम्नां गतिं प्रापयति मानवानां का कथा यमलार्जुनवत् देवान् अपि स्थावरत्वं गमयति। अतः कारणात् शक्तिरूपतो उभयोरपि धर्माधर्मयोः अधिकारे समानेऽपि धर्म एव सेवनीयो नाधर्मः। अधर्मो यदि उन्नतेः परिपन्थी धर्मश्च नियमितरूपेण समुन्नतिसम्पादकः, तर्हि धर्म एव सेवनयोग्यो नाधर्म इति सिद्धम् ॥१९३॥

मनुष्ये तदधिकारो निर्णीयते—

**स्वातन्त्र्यादुभयप्रातिभाव्यं मानवस्य ॥१९४॥**

स्वाधीनत्वात् हेतोर्मनुष्यस्य उभयोरेव प्रातिभाव्यम् उत्तरदायित्वमित्यर्थः। मनुष्यतो निम्नश्रेणयो जीवाः कर्मामव प्रकृतिसम्बन्धतः पराधीना इति पूर्वमेव सम्यक् विवेचितम्। सुतरां पराधीनतया न तेषु धर्माधर्माधिकारः सम्भवः। यतः पराधीनाः न प्रतिभुवः। पराधीनतासम्पादकेष्वेव तेषाम् उत्तरदायित्वं स्वतः सिद्धम्। अतः स्वतन्त्रतारहितेभ्योऽन्यजीवेभ्यो धर्माधर्मशृङ्खला न भवितुं शक्नोति। फलतः पञ्चकोषपरिपूर्णतया पूर्णावयवः, अन्तःकरणपूर्णतया संस्कारसंग्रहसमर्थः, अतएव स्वाधीनो मानव एव धर्माधर्मशृङ्खलारक्षणे समर्थः अतो मानवस्य अधर्मेणावनतिः धर्मेण च समुन्नतिर्निश्चप्रचा ॥ १९४ ॥

मानवसुरक्षोपायमभिदधाति—

**अनुशासनत्रयादवनम् ॥ १९५ ॥**

अनुशासनत्रयेण मानवस्य रक्षणम्। मानवयोनिम् आसादयन् जीवो धर्माधर्मशृङ्खलादायित्वं प्राप्नोति। [illegible] अधर्मतो निवर्तनार्थं धर्मे च प्रवर्त्तनाय त्रिविधस्य अनुशासनस्य प्रयोजनीयता सम्पद्यते। राजानुशासनं, शब्दानुशासनं, योगानुशासनं, चेत्यनुशासनं त्रिविधम्। त्रिगुणभेदेन मनुष्या अपि त्रिविधा भवन्ति। तामसिकस्याधिकारिणः कृते राजानुशासनं कल्याणकरम्। समाजदण्ड-राजादण्डेति भेदेन राजानुशासनं द्विधा विभक्तम्, राजसिकस्याधिकारिणो हितसम्पादनाय शब्दानुशासनमुचितम्। शास्त्रोपदेशेन गुरूपदेशेन च शब्दानुशासनमपि द्विविधम्। सात्त्विकाधिकारिणो महापुरुषस्य कृते योगानुशासनं वेदसम्मतत्। एतस्यापि अपरोक्षानुभूतिभेदेन भेदकथनम्। विपरीतज्ञानवान् मानवो राजदण्ड-समाजदण्डभयेन विना न धर्मपथमारोढुं शक्नोति। तद्वदेव सन्देहात्मक बुद्धिसम्पन्न-राजसिको जीवो गुरुशास्त्रसाहाय्यमन्तरा धर्माधर्मनिर्णयेन अभ्युदयाभिमुखं ह्यग्रेसरो भवति। सात्त्विकबुद्धिसम्पन्नो महापुरुषो वानप्रस्थाश्रमो वा, संन्यासी वा योगानुशासनसादृश्येन आत्मानात्मसदसद्विचारपरायणो भवति। अतः अभ्युदयनिःश्रेयःसाधनाय कस्याप्यनुशासनस्य नूनमावश्यकत्वम्। अनुशासनहीनस्य धर्ममार्गो निष्कण्टको न भवितुं शक्नोति ॥ १९५ ॥

तत्कारणमाचष्टे—

**बुद्धित्रैविध्यात् ॥ १९६ ॥**

मानवस्य बुद्धिः त्रिगुणमनुसृत्य त्रिविधा भवति। सत्याश्रययुक्ता निश्चयात्मिका बुद्धिः सात्त्विकी, सन्देहात्मिका सा राजसिकी, विपरीतज्ञानोत्पादिका तामसिकी बोध्यते। त्रिविधबुद्धेरनुसारेण अधिकारस्य स्वभावसिद्धत्वात् अनुशासनमपि त्रिविधं स्वभावसिद्धमेव। श्रीगीतोपनिषदि त्रिविधबुद्धिलक्षणं भगवता श्रीकृष्णेन स्वयमुपवर्णितम्।

तथाहि—

प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥
यया धर्ममधर्मञ्च कार्यञ्चाकार्यमेव च।

अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥१९६॥

प्रसंगतः क्रियानियामकं प्रतिपादयति—

नैसर्गिकक्रियानियामकौ देशकालौ ॥ १९७ ॥

नैसर्गिक्याः क्रियाया नियामको देशकालौ भवतः । अनुशासनाधीनकर्मानुष्ठानेन मनुष्यस्य निर्बाधक्रमोन्नतिरिति पूर्वमेव सिद्धान्तितम् । इदानीं देशकालविचारः कर्त्तुमावश्यकः । यतो देशकालौ कर्मनियामकौ । प्राकृतिकस्पन्दनतः कर्मसमुत्पत्तिरतः कर्म स्वाभाविकम् । एवं सत्यपि देशकालौ कर्मनियामकौ । प्राकृतिकं स्पन्दनं न्यूनाधिकरूपतो देशकालौ दधाति । यतः प्राकृतिकः परिणामो देशकालपरिच्छिन्नः । यद्यपि मूलप्रकृतेः स्वरूपं देशकालतोऽपि सूक्ष्मम्, किन्तु यदा प्रकृतिः वैषम्यावस्थां प्राप्ता परिणामिनी तदा सा गुणवती सती देशकालद्वारा परिच्छिन्ना भवति ।

एतादृशपरिच्छिन्नत्रिगुणमयप्रकृतिस्पन्दनं यदि कर्म, तदा तदपि देशकालपरिच्छिन्नमेव । अतः देशकालयोः कर्मनियामकत्वं स्वतः सिद्धम् । स्थूलरूपेणऽपि उदाहरणेन विज्ञानमिदमवगन्तुं शक्यते यत् सर्वमपि कर्म सर्वयोर्देशकालयोः कदाप्युपयोगि भवितुं नार्हति । दिवानिद्राशीलो मानवोऽल्पायुर्भवति । रात्रिनिद्रात्यागो चापि । अतो रात्रौ निद्राप्राकृतिको नियमः एवमेव देशोऽपि वेदितव्यः । १९७॥

एतेन किमित्युच्यते—

तस्मादाद्यन्तवत्ता कर्मणः ॥१९८॥

तस्मादेव कारणात् कर्मण आद्यन्तवत्ता । यदा हि कर्मणो नियामकौ देशकालौ कर्म च देशकालपरिच्छिन्नम्, तदा कर्मणः सादिसान्तता स्वतः सिद्धा । यदि देशकालपरिधेरन्तर्गततत्वं कर्मणः सिद्धम्, तदा तस्य सादिसान्तत्वं सिद्धमेव ॥१९८।

प्रसंगतो देशकालविज्ञानमुपवर्ण्यते—

देशकालौ प्रकृतिब्रह्मात्मकौ ॥१९९॥

देशकालौ प्रकृतिब्रह्मणोः प्रतिकृतिरूपौ । ब्रह्मणि विलीना प्रकृतिः ब्रह्मतः पृथग् भवन्ती द्वैतभावं प्रकटयति, तदा सर्वप्रथमं देशकालौ प्रादुर्भवतः । कालो ब्रह्मस्वरूपः, देशः प्रकृतिरूपश्च । कालानुभवे चित्सत्ता प्राधान्यम् । इमावेव देशकालौ यावदद्दृश्यप्रपञ्चमाच्छादयन्तौ नैजमनादित्वमनन्तत्वपरिदर्शयन्तौ यथाक्रमं ब्रह्मप्रकृत्योर्महत्वं घोषयतः अतोहि कालो ब्रह्मात्मकः देशश्च प्रकृतिस्वरूपः इति स्वीकृतिर्न विज्ञानविरुद्धा ॥१९९॥

अन्यदपि —

तयोरनाद्यनन्तत्वं विराड्वत् ॥२००॥

अनन्तकोटि-ब्रह्माण्डमयकार्यब्रह्मरूपिणो भगवतो विराड्रूपमिव देशकालौ अनाद्यनन्तौ । पिण्डरूपाया अधिभूतसृष्टेः, ब्रह्माण्डरूपाया अधिदैवसृष्टेश्च सादिसान्तत्वे सत्यपि अनन्तब्रह्माण्डमयसृष्टिप्रवाहरूपिण्या अध्यात्मसृष्टेः अनाद्यनन्तत्वमिति पूर्वमेव सुसिद्धम् । इदमपि प्रागेव सुसिद्धान्तितं यत् ब्रह्मो ब्रह्मप्रकृतेर्महामायायाश्च साक्षात् प्रतिकृतरूपौ यथाक्रमं कालदेशौ ज्ञातव्यौ । सर्गस्य सर्वाण्यपि वस्तूनि देशकालपरिछिन्नानि । सुतराम् अनन्तकोटिब्रह्माण्डमयस्य भगवतो विराड्मूर्तिरूपयोराद्यन्तरहितत्वं देशकालयोरवश्यभावि । अतः श्रीभगवतो विराड्मूर्तिरिव उभौ कालदेशौ आद्यन्तरहितौ ज्ञातव्यौ ॥२००।

द्वयोरेतयोः कर्मणि कीदृशः प्रभाव इत्युच्यते—

तदनुबन्धिक्रियातारतम्यात् ॥२०१॥

देशकालानुसारं क्रियायास्तारतम्यं बोध्यम् । कर्मणो देशकालपरिच्छिन्नत्वे, सर्गस्य सर्वविधेषु पदार्थेषु देशकालयोः पूर्णप्रभावे सिद्धे देशकालानुसारतः कर्मणोरूपान्तरत्वं स्वतःसिद्धम् । अतोहि देशकालस्थित्यनुसारं धर्मस्य तदङ्गोपाङ्गानां च स्वरूपतारतम्यम् । केवलं तदीयसाधनेष्वेव

नहि, किन्तु फलेष्वपि तारतम्यं वेद्यम् । यज्ञीयायाः अयज्ञीयायाश्च भूमेः आचारेषु, आर्यायाः अनार्यायाश्च धराया धर्मसाधनेषु तारतम्यं विद्यते । तीर्थेषु अन्यत्र वा कृतस्य कर्मणः फलेषु महदन्तरमिति स्मृत्यनुमोदितम् । मरुस्थल-पार्वत्यसमतलसुन्दरभूमिनिवासिनां धर्मसाधनक्रियासिद्धांशे तारतम्यं स्वभाविकम् । एवं हि कालधर्मोप्यपरिहार्यः आश्रमधर्मस्य मूलभित्तिः कालधर्मसम्बद्धा निर्णीता । मानवानामायुरनुसृत्य ब्रह्मचर्य-गार्हस्थ्यवानप्रस्थ-संन्यासधर्मा निर्णीताः शोभने काले, यत् कर्म अनाचाररूपेण अधर्मरूपेण च वेदशास्त्रेषु समाम्नातं तदेव दुर्भिक्षमहामारीराज्यविप्लवादिकाले आपद्धर्मानुसारं निन्दनीयं नास्ति । एवंप्रकारेण देशकालयोः प्रभावस्य धर्मे तदङ्गोपाङ्गेषु च परिपातेन क्रियास्वरूपतारतम्यमवश्यंभावि॥ २०१॥

सुतराम्—

अतो धर्मवैचित्र्यम् ॥२०२॥

अतः कारणात् धर्मे वैचित्र्यम् । स्मृतिशास्त्रे धर्मस्य महिमानं बदता व्यासमहर्षिणा प्रोक्तम्—

यं पृथग् धर्मचरणाः पृथग् धर्मफलैषिणः ।
पृथग् धर्मैः समचन्ति तस्मै धर्मात्मने नमः ॥

अतः कारणादेव वैदिको धर्मः सर्वधर्मापेक्षया व्यापको वैचित्र्यपूर्णो विविधाङ्गोपाङ्गविभक्तश्च । कुत्रचित् लौकिके सिद्धान्ते अप्रतिष्ठतत्वात् लोकोत्तरापौरुषेयसिद्धान्तेषु स्थितत्वात् च वैदिको धर्मः स्वाभाविक वैचित्र्यपरिपूर्णः । यदा हि देशकालपात्रपार्थक्यं स्वाभाविकम्, तर्हि तदनुसारतः क्रियास्वरूपफलयोः पार्थक्यं स्वभावसिद्धम् । पात्रसमावेशो अन्ययोर्द्वयोरेवान्तर्गतः प्रथमतः स्थूलशरीरं दर्शनशास्त्राचार्यैर्देशान्तर्गतमङ्गीकृतम् । यतो ब्रह्माण्डमिव पिण्डमपि देशपरिचायकम् द्वितीयतः स्थूलशरीरेण कालधर्मस्य साक्षात् सम्बन्धत्वात् स्थूल एव वपुषि कालप्रभावः प्राकट्यमापद्यते । अतो हि देशकालपात्रेषु देशस्यैव प्राधान्यम् । पात्रस्य विचारो देशकालयोरेवान्तत्वर्गतत्वात् पूज्यपादो महर्षिसूत्रकारः केवलं देशकालद्वारैव धर्मस्य वैचित्र्यपूर्णत्वमङ्गीकृतम् । धर्मकर्तव्यसदाचारादिनिर्णयप्रसङ्गे देशकालविमर्शो विज्ञानसिद्धः । अतो हेतोः साधारणतया साधारणधर्मो ब्रह्माण्ड-पिण्डधारकः सर्वजीव हितकारी च किन्तु विशेषधर्मो विशेषाधिकारहितकरश्च । पूर्णावयवो मानवो जीवः कर्मसंग्रहे स्वाधीनः अतस्तत्र रुचिवैचित्र्यमधिकारवैचित्र्यं च निभाल्यते । अतः किल "यं पृथग् धर्मचरणाः" इत्युक्तो महर्षिभिर्धर्मो नमस्कृतः वेदानां शाखाभेदेन पुराणतन्त्रादीनामुपासनाभेदेन आचारवैचित्र्यं नियमितरूपेण समभ्युपगम्यते । सम्प्रदायभेदतश्च बहवो मतभेदाः प्रतीयन्ते । अतोहि भगवता वेदव्यासेन महाभारते प्रोक्तम्—

'वेदा विभिन्नाः श्रुतयो विभिन्नाः ।
नाऽसौ मुनिर्यस्य मतं न भिन्नम् ॥' इत्यादि

अनेनैव हेतुना आर्यानार्यधर्मभेदः । जागतिकानि बहुविधानि धर्ममतान्तराणि उत्पद्यन्ते उत्पत्स्यन्ते च ॥२०२॥

सम्प्रति महर्षिषु मतभेदः प्रदर्श्यते—

अतो महर्षिप्रस्थानेषु भेदप्रतीतिः ॥२०३॥

कारणेनैतेन महर्षीणां प्रस्थानेषु भिन्नता प्रतीतिः । आब्रह्माण्डात् पिण्डपर्यन्तम् आग्रहोपग्रहात् परमाणुपर्यन्तं पृथक्पृथग्रूपेण सर्वस्य धारणमेव धर्मकार्यम् । अन्यच्च स्थूलसृष्टिवत् सूक्ष्मसृष्टावपि धर्मस्य पृथक् पृथगाधिपत्यम् । हेतोरस्मात् धर्मस्वरूपमतभेदप्रतीतिः साधनानुसारं भेदश्च स्वतः सिद्धः । अपरिहार्य्यकारणेनैतेन धर्म विषये मुनीनाम् ऋषीणां च मतभेदः प्रतीयते ॥२०३॥

इदानीं धर्मलक्षणविषये प्रथमं मतभेदमाचष्टे—

विहितकर्म धर्मेति जैमिनिः ॥२०४॥

वेदविहित कर्मैव धर्मशब्दवाच्यम् इति जैमिनिमतम् । महर्षिजैमिनिः यत्र यत्र धर्मलक्षणं प्रोक्तवान् तत्र तत्र एतन्नियमानुसारेणैव धर्मं लक्षितवान् । वेदस्त्रिकालज्ञः ।

क्रमशः

# विपन्नासुरभारती

—श्री रामस्वरूप शास्त्री 'अमर'
साहित्यपुराणोतिहास-धर्मशास्त्र आयुर्वेदाचार्याः
तालबेहट, झांसी (उ० प्र०)

यथा निराश्रिता नारी, पीड्यते स्वपतिं विना।
राज्याश्रयं तथाऽप्राप्य देवभाषाऽस्ति पीडिता ॥ १ ॥

इन्दिरा-शासने दीना यथाऽऽसीद् देवगीरियम् ?।
मुरारेः शासने तद्वद् दुर्बला दृश्यतेऽधुना ॥ २ ॥

मन्त्री प्रकाशचन्द्रोऽसौ प्रकाशं न प्रयच्छति।
संस्कृत्यै संस्कृतायाथ देवभाषा विषीदति ॥ ३ ॥

सार-दा शारदा नेयं विपन्नास्तु विशारदाः।
धनदा दानहीनाश्च देवभाषाऽस्तिदुःखिता ॥ ४ ॥

संस्कृतिः देवभाषा च देवताः समुपेक्षिताः।
स्वतन्त्रे शासने दृष्टा विपन्नाःसज्जनास्तथा ॥ ५ ॥

इन्दिरा स्यान्मुरारिर्वा ध्यानं कस्यापि नो गतम्।
संस्कृतौ संस्कृते लोके विपन्ना देश-भारती ॥ ६ ॥

हंसाः संस्कृतभाषाया,
मलीना मानसं विनाः।
मुरारिः सानुकूलः स्याद्
विपद् दूरं तदा भवेत् ॥ ७ ॥



पञ्जीकृत-संख्या—एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

**पत्र-संहिता**

१. 'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश—( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे २/०० पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-प्रथमाङ्कतः ( जनवरीअङ्कतः ) एव ग्राहकत्व स्वीक्रियते। माध्यमिकेन केनापि अङ्केन न स्वीक्रियेत।

३. आंग्लमासस्य २६ मत दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भवेत्। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्ट लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापनम्-शुल्कम्**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी कैण्ट।
मुद्रण-स्थल—जयभारत प्रेस, बाँसफाटक, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

वर्षम् ५४

卐

अङ्क : ११
नवम्बर १९७७

卐

संरक्षिका
श्रीमती विद्यादेवीजी महोदया

卐

प्रबन्धसम्पादिका
श्रीमती एस० बी० पाई०

卐

वार्षिकं मूल्यम्
९/०० रूप्यकाणि

卐

प्रत्यङ्क मूल्यम्
१/०० एकरूप्यकम्

卐

सम्पादकः— डॉ० परमहंस मिश्रः

सहसम्पादकौ—
डॉ० कपिलदेव पाण्डेयः श्रीश्यामबिहारी त्रिपाठी

## शरत्सूर्योदयः

म० म० श्री पं० लक्ष्मीनारायण द्विवेदः महाकविः, तिर्वा।

तारा निर्निस्तारा: सकलकलालंकृतो बिधुर्बिकलः ।
सूर्योदयमहिमामं,गायति निगमागमब्रजः स्तुतिभिः ॥ १ ॥

नभसि निरस्तध्वान्ते, हंसस्वनगीतिमाधुरीललिते ।
सूर्योदयः प्रसादिनि, कुङ्कुमलेपी सरोजिनी-हृदये ॥ २ ॥

शालिहरिद्भिर्वप्रं, र्हरित्सु सत्यं हरित्वमयितासु ।
सूर्योदयो गरुत्मन्, मणिमयतामानयज्जयति ॥ ३ ॥

सद्योविधूततूल-प्रचय-समाश्वेत-गिरिकल्पैः ।
नीरधरैर्निर्नीरैः सूर्योदय ! भासि शारदे मासे ॥ ४ ॥

मार्त्तण्डोऽसौ समयसमुल्लसत्प्रतापैः,
साध्यक्षाणां परवसुभिः समुन्नतानाम् ।
नक्षत्राणामनिशपटुव्यवस्थयोधा,
लुण्टाकानामिव करकर्त्तनं करोति ॥ ५ ॥

# सूर्योदयः

अयं सूर्यो देवः सृजति जगदेतन्निजकरैः
महाक्षारं पाथः व्रजति रसतां भानुजगुणैः ।
धरागर्भे बीजं स्फुटति भुवि वृद्धिं च तनुते
विभासूत्रैर्विश्वं वयति वसनं कौलिक इव ॥ १ ॥

प्रभातेऽयं पूषा निगिरति शनैस्तारककुलं
चरन् मन्दं मन्दं सरसि नभसो हंससदृशः ।
तदाऽऽलोकैर्लोकं तमसि पिहितं संविवृणुते
सुधीः शिष्यं मुग्धं सदसि वचनैः सद्गुरुरिव ॥ २ ॥

कदाचिद्बालांशुर्विलसति जनानन्दजनकः
कदाचिच्चण्डांशुर्दिवि शिखरसंस्थानकिरणः ।
कदाचिन्मन्दांशुर्जलदपटलप्रान्तपिहितः
रविः संध्यारागी स्फुरति गगने ताम्रवदनः । ३ ॥

सदा विष्णुस्त्राता रविकिरणपीताम्बरधरो
महालक्ष्मीनाथः परिधिरिव चक्रं च दधते ।
गदापद्मे चिन्हं विलसति सदा तस्य महसा
शिवं रूपं धृत्वाऽवतरति च पुनः भूतभवनः ॥ ४ ॥

रविप्रभाभिर्नवमेघमाला
हेम्नाङ्कितेवास्ति कषोपलालिः ।
क्वचित्तु सा वायुसमीरिताऽपि
तडिल्लतासङ्गमुपेयुषीव ॥ ५ ॥

न मोदमीयुः कुमुदानि चोराः
सूर्योदये ध्वान्तमुलूकसंघाः ।
सत्वोदये स्वात्मनि लोभमोहा
मनोविकारा इव भोगकामाः ॥ ६ ॥

लोकस्तु चैतन्यमवाप भानोः
शिष्यो गुरोर्ज्ञानमिवात्मशुद्धम् ।
उत्पक्ष्मनेत्रा सहसा विकासे
सरोजहासैः सह सा दिनश्री ॥ ७ ॥

**रामचन्द्र शास्त्री**
राजघाट बेसेन्ट स्कूल, वाराणसी

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५४ तमे वर्षे ] वाराणसी, कार्तिक, नवम्बर १९७७ [ अङ्क ११


## ✱ तन्मे मनः शिवसंकल्पमस्तु ✱

यज्जाग्रतो दूरमुदैति दैवं,
तदु सुप्तस्य तथैवैति ।
दूरं गमं ज्योतिषां ज्योतिरेकं,
तन्मे मनः शिवसंकल्पमस्तु ॥१॥

येन कर्माण्यपसो मनीषिणो,
यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां,
तन्मे मनः शिवसंकल्पमस्तु ॥२॥

शु० य० ३४ । १-२

साधकः सर्वशक्तिमन्तं परमेश्वरं प्रणमति सर्वात्मना स्वात्मानं समर्पयन् स्तौति च, हे सर्वसमर्थ परमपुरुष ! हे बाह्याभ्यन्तरनियन्त्रणतंत्रस्वतंत्र ! मयि साधके तथा दयाः क्रियाः यथा मे समाराधकस्य सकलविकल्पात्मकं मनः विश्वामोदमाङ्गल्यसमन्वितसंकल्पसंवलितं स्यात् । इदं मनस. महत्वं यदिदं चाक्षुषप्रत्यक्षादिक्रियासु सर्वेन्द्रियाणि अतिशेते । जागर्यायां जागरूकमपि पश्चादिदं करोति । अप्रमेयस्यापि प्रकाशकं दिव्यशक्ति-सम्पन्नमिद मनः सुषुप्तावस्थायां पुनः आगच्छति शान्त्याच तिष्ठति, स्वप्ने चाञ्चल्यमङ्गीकरोति । इदं सर्वेन्द्रियाणां प्रकाशकमस्ति । यतः आत्मा यदा मनसा, मनः इन्द्रियैः इन्द्रियाणी अर्थैः संयुज्यन्ते तदा प्रवृत्तिः प्रतिफलति, अतएव जगन्मङ्गलमूल्यमहात्म्यकल्पकं मे मनः विश्वामोदमावहतु !

स्वस्थेन येन मनसा मेधाविनः कर्मप्रवृत्ताः भवन्ति । एतादृशाः कर्मण्याः कर्मनिष्ठाः येन यज्ञादिज्ञेयकर्मसु ज्ञातव्यं जानन्ति, यच्च सर्वेषामन्तः दीव्यति, तदीदृशं यष्टुं शक्तम् मे मनः शुभसंकल्पसमन्वितमस्तु ।

# श्रीमहर्षिज्ञानानन्दचरितं महाकाव्यम्

## स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः

### [ द्वाविंशे सर्गे ]

शवमर्चितमस्य सत्कृतं विबुधाः काशिनिवासिनः शुभम् ।
उपनीय पदं च वैष्णवं सुचितां संविरचय्य चन्दनैः ॥ ९१ ॥

शुचिदेवसरिन्निमज्जितं सुमनश्चन्दनचर्चितं तथा ।
परिभूषितमुत्तमाम्बरैः श्रुतिमन्त्रैरदहंश्च सस्वरैः ॥ ९२ ॥

शवभस्मचयं विपश्चितो निखिलाः साधुमतल्लिकास्तथा ।
मनुजा हरभक्ततल्लजाः स्वशिरोभिर्मुदिता ववन्दिरे ॥ ९३ ॥

भुवि शाश्वतधर्मभानुमान् अहहा हन्त ययाविहाऽस्तताम् ।
स सनातनसार्थसेवितः सहसा कल्पतरुर्लयं गतः ॥ ९४ ॥

गुणगौरवशालिभूधरो विबुधैराश्रित एष शीर्णवान् ।
परिशोषमितोऽद्य विश्रुतो निखिलज्ञानपयोनिधिर्महान् ॥ ९५ ॥

विविधेषु च पुस्तकेषु या भवदीयाः श्रुतिसारसम्पदः ।
अयि साधुवरेण्य ! ता ध्रुवं सुपथं दर्शयितुं नरानलम् ॥ ९६ ॥

द्विनभोङ्कुयुक्तवैक्रमे रुचिरेऽब्दे वरमासि भाद्रके ।
जनुराप्य स चार्धरात्रिके वसुतिथ्यामसिते दले तथा ॥ ९७ ॥

मकरेऽद्रिखखद्विसंयुते यतिरब्दे च शुभोत्तरायणे ।
विषमेषुतिथौ दलेऽसिते विजहे प्रातरयं निजं वपुः ॥ ९८ ॥

विशालं भालं ते प्रसृमरजटाजूटसहितम्,
स्वरूपं दृक्पेयं पदरतसितश्मश्रुमहितम् ।
अहो दर्शं दर्शं स्मृतिपथमगाद् यः स्मरहरो,
भवेदध्येतृणाम् ऋषिचरितमेतत् स शिवदः ॥ ९९ ॥

इति श्रीकविवर्यविन्ध्येश्वरीप्रसादशास्त्रिविरचिते
महर्षिज्ञानानन्दचरिते महाकाव्ये
द्वाविंशः सर्गः ॥

( क्रमशः )



सम्पादकीयम्

# समग्रक्रान्ति सन्दर्भे विचारणीयः पक्षः

किं वयं हिन्दव एव सम्पूर्णक्रान्तिं करिष्यामहे ? एतेषां कृते एव एषः समग्रक्रान्तिसन्देशः ? सम्प्रति प्रश्नोऽयं समुज्जृम्भते स्वभावतः । जगत्यामस्यामनेके धर्माः सम्प्रदायाश्च प्रचलिता आसन्, सन्ति च । तेषु ख्रीष्ट्रमोहम्मदीयौ द्वावेव स्वकीयसाम्प्रदायिकसिद्धान्तवादिनां प्रत्यास्थावन्तौ सुदृढतया इदमित्थमेवेति मन्वानौ राज्यदृष्ट्याऽर्थदृष्ट्या जनसंख्यादृष्ट्या च समेधमानौ स्वकीयान् धर्माचार्यान् एव प्रमाणानि स्वीकुर्वाणौ जगत् जगन्ति च स्वप्रथाप्रभावान्वितानि कर्तुं वैविध्येन यतेतेतमाम् !

वयम् स्मः हिन्दवः, प्रसिद्धाः धर्मप्राणाः ! राष्ट्रवादिनः, 'मुण्डे मुण्डे मतिर्भिन्ना' इत्युक्तेः प्रत्यक्षं प्रतीकाः । सम्प्रति अस्माकं का दशा इति नेत्रोन्मीलनतया द्रष्टव्या, गभीरतया विचारणीया च वर्त्तते । भारतवर्षेऽस्मिन् सार्द्धद्वयकोटिपरिमिता हिन्दवः ख्रीष्ट्रधर्मिणः संवृत्ताः । विश्वस्य षट्सप्तति (७६) ख्रीष्ट्रीयदेशाः संघटिताः सन्तः सम्पूर्णं भारतं द्वादशभागेषु विभज्य पद्मपद्मरूप्यकवलेन निर्धनान् उपेक्षितांश्च हिन्दून् ख्रीष्ट्रान् व्यदधुः विदधति च । यथा कनाडा राजस्थानस्थान् हिन्दून्, फ्रान्सः मद्रासवासिनः, स्पेनः कर्नाटकीयान्, अमेरिका च पंचनदप्रान्तप्रजाः ! न केवलं धनप्रदानेनैवापितु शिक्षादिव्यवस्थासु च हिन्दूधर्मविद्वेषं ते ख्रीष्ट्रसंस्थाछात्रमस्तिष्केषु उद्भरन्तः सन्ति आर्यधर्मं प्रति दृढामनास्थामुत्पादयन्तश्च विलसन्ति !

एवमेव मोहम्मदीयाः देशा अपि स्वैरमाचरन्ति ! नवनिर्मिते पाकिस्ताने बङ्गलादेशे च विभाजनकालीना हिन्दवः समूलमुज्जासिताः । सततं धर्मान्तरणार्थं शिष्टान् हिन्दून् विविधतया ते व्यथयन्ति । एतद्देशीयाश्च बहवः विधर्मिणः कन्यादूषणापहरणादिकार्येषु निमग्नाः हिन्दून् क्षीणान् विदधति । सम्प्रति प्रायः द्वादश कोट्यधिकाः मोहम्मदीयाः भारते, पाकिस्ताने निर्मितेऽपि श्वसन्ति ! इमे सर्वे ख्रीष्ट्राः मोहम्मदाश्च वस्तुतः हिन्दव एव सन्ति सम्प्रति कूटशत्रूनिव हिन्दून् पश्यन्ति । हिन्दूज्जासनमूर्तित्रोटनव्यापारसंव्यापृता सन्ति । वर्त्तमाने दुर्भाग्यपूर्णे संघर्षे वाराणस्यां दुर्गाया मूर्त्तिखण्डनम् प्रत्यक्ष प्रमाणं वर्त्तते ।

अत्रत्यास्ति विचित्रा दशा । ये धर्मस्य धकारमपि न विदन्ति तेऽपि धर्मधौरेयतां धारयन्तः धर्मविषये विवदन्ति, धर्मसम्बन्धे सिद्धान्तानुद्घोषयन्ति, मुखमस्तीति वक्तव्यमिति कृत्वा स्वेच्छया यत्किमपि कथयन्ति । इन्दिराशासनं तु धर्मनिरपेक्षमेवासीत् । सम्प्रति तथाकथितजनतानामधारिशासनं तु चातुर्वर्ण्यमेवाखेटकं कुर्वत् हिन्दूजनतायाः धर्मसंकटं समुत्पादयितुं प्रयत्नवद्दृश्यते ।

सम्पूर्णक्रान्तिसमुद्घोषस्त्वयमपरः गण्डस्योपरि स्फोटः । हिन्दव एव विशेषतश्चातुर्वर्ण्यसमर्थकाः सनातनसिद्धान्तसमर्थकाः, यागयज्ञादिकर्मकाण्ड, वेदं सनातनसिद्धान्तं मन्वानाः आर्या एव बलिपशवः भविष्यन्ति इति लक्ष्यते । एतावत् साहसं तु नास्त्येव यदेते क्रान्तिकृकवाकवः मोहम्मदीयसिद्धान्तं प्रति किमपि वक्तुं शक्ष्यन्ति । हजरतबलबालप्रकरणं सर्वैरविस्मरणीयमेव वर्त्तते । अवशिष्यन्ते अनाथा इव विशुद्धवेदार्थव्यवस्थया जीवनयापनसमीहकाः केचिदार्याः !

आँग्लभाषाध्यायिनां स्वधर्मस्वकर्णोज्जासनरसिका एका पुरुषपरम्परा (पीढ़ी) भारते निर्मिता वर्त्तते । एते जन्मतः भारतीयाः किन्तु कर्मधर्मतः

वैदेशिकाः भारतीयतामेव रूढिवादग्रस्तां मन्वानाः पदे पदे बावदूकतां कुर्वन्ति। एतस्याः पुरुषपरम्परायाः व्यवहारान् दर्शं दर्शं मस्तिष्कव्यथा जायते। भवन्तोऽपि पश्यन्तु। प्रातरुत्थायैते बेडटीपीयूषमाचामन्ति। शौचंकृत्वा कर्गलेनैव कार्यं निर्वाहयन्ति। शौचकाले मौनम् मुधा, हस्तप्रक्षालनमपि रूढिं मन्वते। उत्तिष्ठन्त एव मूत्रं कुर्वन्ति। धौतोत्तरीयविद्रोहिणः बूशर्टपतलून-बेलबाटमानि परिदधति। मूत्रकणेन सिक्तेन वस्त्रेण संवलिताः हस्तेन शिश्नधारिणः पुनः अप्रक्षाल्यैव मुखे अंगुलिमेलकाः इमे युवानः आदर्शाचारच्युताः पुरातनाचारचरित्रान् रूढिग्रस्तान् उद्घोषयन्ति! एतादृशा एव सम्पूर्णक्रान्तेरग्रदूताः जयप्रकाशस्य चतुर्दिक् मंडलायन्ते! सर्वत्र सम्प्रति संत्रासो वर्तते। विद्यालयेषु-महाविद्यालय-विश्वविद्यालयेषु—शिक्षकाः प्राध्यापकाः स्वकीयाः प्रतिष्ठाः रक्षन्तः यथाकथमपि जीवनवृत्तिं धारयन्ति! एतेषां भयेन बालिकाः युवतयः महिलाः पथः परित्यज्य कथमपि गच्छन्ति! मार्गे उभयपार्श्वे यत्र तत्र स्थिताः युवानः मुखेन मुरलिकास्वनं निष्कासयन्तः कटाक्षं कुर्वन्ति। इमे कक्षासु पठन्ति तु नह्यत्र तत्र राजनीतिं स्थिरयन्ति। स्त्रीमात्रमेते स्वालिङ्गनसीम्नि बद्धुं स्वाधिकारमङ्गीकुर्वन्ति। मातृपितृगुरुजनानामादरं हेयं पश्यन्तः स्पृश्यास्पृश्य-भक्ष्याभक्ष्य-गम्यागम्य-पुण्यापुण्य—कार्याकार्यनिर्णये नितान्तमसमर्थाः स्वैराः सम्प्रति देशदुरवस्थामपश्यन्तः तदर्थं किमपि स्वकीयमुत्तरदायित्वं विहाय एते श्रीजयप्रकाशाज्ञया समाजस्यामूलचूलं परिवर्तनं करिष्यन्ति, यज्ञोपवीतं त्रोटयिष्यन्ति, शिखाः कर्त्तयिष्यन्ति, आचारपद्धतयो रूढयः एवेति समस्तभारतीयसंस्काराचारान् दूषयिष्यन्ति, मानवतायाः स्थाने पशुतां स्थापयिष्यन्ति अन्तरजातीयविवाहेन वर्णसाङ्कर्य्यं प्रसारयिष्यन्ति तदेव भविष्यति हिन्दूनां समाजे सम्पूर्णा क्रान्तिः विदेशीयादर्शप्रेरिता दुर्भाग्यपूर्णेति!

सम्प्रति हसन्तः सन्ति मोहम्मदीयाः, हृष्टाः मोदन्ते ख्रीष्ट्रीयाः मलिना म्लाना च ग्लायति भारतभारती भारतीया संस्कृतिः!

श्रीमता जयप्रकाशेण एकस्मिन् साक्षात्कारे प्रकटितं यत् लेनिनमहोदयेन सम्पूर्णक्रान्तेः मार्गः परित्यक्त आसीत्! बोलशेविक क्रान्तिरेव तेन स्वीकृता प्रतीयते एषः सम्पूर्णक्रान्तिसमुद्घोषः लेनिनतोऽपि अग्रगण्यत्वेन स्वात्मानं ख्यापयितुं समुद्घुष्टो आस्ते। चतुर्दिक् भ्रष्टाचारस्य व्यभिचारस्य धूर्त्तातायाः वंचनायाः छलनायाः उपद्रवस्य हत्यायाः चौर्यस्य लुण्ठनस्य साम्राज्यम् उज्जृम्भते, नैतिकतायाः निम्नस्तरता निरन्तरं निम्नतामेवालिङ्गति, सत्प्रवृत्तीनां विरोधः दुष्प्रवृत्तीनां प्रसारः पापाचारस्य दुष्पारिणामः चतुर्दिक् परिलक्ष्यते, तदा आवश्यकता आस्ते देशे नैतिकतायाः समुत्थानस्य तन्नहि भवति।

देशे विदेशीया भाषा, विदेशीया वेशभूषा प्रचलति, वैदेशिकी सभ्यता प्रसृता दृश्यते। कोऽपि राष्ट्रनेता एतासां समस्यानां समाधाने ध्यानं नहि ददाति, किं भविष्यति देशस्यास्य भविष्ये? इतिवर्त्तते महत्याश्चिन्तायाः विषयः!

सूर्योदयः व्यक्तिशः समुत्थानात् विश्वसमुत्थानसिद्धान्ते विश्वासं करोति! प्रथमतः सर्वे युवका व्रतधारिणाः भवन्तु! एको वेशः, एका संस्कृतसम्पर्कभाषा, एको वैदिकः स्वदेशी आदर्शः रामवद्वर्त्तितव्यं न रावणवदिति संकल्पः तेषां श्री जयप्रकाशमाध्यमेन स्यादित्येवं देशस्य निश्चप्रचं परमकल्याणं भविष्यत्येवेति शम्!

# संसारतरणे ज्ञानमेवोपायः

□ स्वामी ब्रह्मानन्दः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयवाराणसीस्थः।

स्थावरजङ्गमात्मकः सर्वपदार्थसमुदायरूपः संसारपदवाच्योभवति। केचन दुखादीनां कार्यकारणरूप एव संसारः स चानादिरिति वदन्ति पूर्वापरकालानियमात्। दुखादयो मिथ्याज्ञानपर्यवसाना अविच्छेदेन प्रवर्तमाना एव संसारपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावन्तो भवन्ति। सर्वदर्शनसंग्रहे च मिथ्याज्ञानादयो दुखान्ता अविच्छेदेन प्रवर्तमानाः संसारशब्दार्थः। सर्वदर्शनसङ्ग्रहः पृ० २४६। यथा—

यच्च किञ्चिज् जगत् सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥

अपि च—

यदा स देवो जागर्ति तदेदं चेष्टते जगत्, मनु. अ० १ श्लो० ५२

अन्यच्च—

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।

जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥ कुमारसंभव' सर्ग २, श्लोक ९। इत्यादौ चराचरात्मकस्य सर्वस्यापि विश्वस्य जगति अन्तर्भावो भवतीति भावः। तस्य लक्षणञ्च पदार्थत्वं पदजन्यप्रतीतिविषयत्वम्। अथवा प्रमेयत्वं प्रमाविषयत्वं, तच्चेश्वरीयप्रमाविषयत्वम्। एवम् अभिधेयत्वम्, अभिधाविषयत्वं, तच्चेश्वरीयाभिधाविषयत्वम्। तेन जीवानामसर्वज्ञत्वेन ऐहिकामुष्मिकयावत्पदार्थानामज्ञानेऽपि नाव्याप्तिः। लोक एव संसार इति काव्यज्ञविद्वांसो वदन्ति, विवदन्ते चात्रबहवः। अयमाशयः-धाता यथापूर्वमकल्पयत् इति पदे खण्डप्रलयस्य प्रसिद्धि गतत्वेन संसारस्य प्रवाहानादित्वं सिद्धयति। व्यक्तिगतरूपेण अर्थात् प्रातिस्विकरूपेण तस्यानित्यत्वं विनाशित्वञ्च प्रकल्पनीयम्। तर्कप्रकाशे ४।१८

अपरे च दार्शनिका जन्ममरणप्रबन्धः प्रेत्यभावापरपर्याय एव संसारः। कणादसूत्रव्याख्या ६।२।१५ यथा-संसारसागर निमग्नमनन्तदीनमुद्धर्तुमर्हसि-हरे पुरुषोत्तमोऽसि "इत्यादौ संसारशब्दस्यार्थो जन्ममरणप्रवाहरूपो प्रेत्यभावो स एव च जीवमात्रस्यास्ति बन्धलक्षणः। तस्य च नामान्तरमजरंजरीभावः। कणादसूत्रविवृतौ ६।२।१५। क्रमेण दुखोत्पाद एव संसार इत्यपि केचन मनीषिणो दार्शनिका वदन्ति। यथा—संसाराभिमानिनो जीवस्यैव संसारित्वं सम्पद्यमानं दृश्यते शास्त्रेषु च श्रूयतेऽपि सांसारिकं सुखमपि धर्मरिक्तशरीरावच्छिन्नमेव सुखमस्तीत्यत्र नास्ति लेशतोऽपि सन्देहानध्यवसायावसरः। वल्लभीया वेदान्तिनो मिथ्याज्ञानजन्यसंस्काररूपा वासना, शरीरारम्भकादृष्टविशेषो वा स्वादृष्टोपनिबद्धशरीरपरिग्रहो वा संसार इति विवेचयन्ति। अत्र संसार गतिप्रकारविधान्तु "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् "इत्यादिना कथितो वेदितव्यः। ब्रह्मसूत्र ३।१।१। मध्वाचार्यास्तु भूतबन्धः संसार इत्याहुः, तदुक्तं वाराहे-'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्। ब्रह्मसूत्रमध्वभाष्यम् ३।१।१। सांख्यास्तु सूक्ष्मलिङ्गशरीरं पूर्वपूर्वस्थूलशरीरपरित्यागपूर्वकमभिनवस्थूलशरीरं यदुपादत्ते स एव संसार इति वदन्ति। उक्तश्च "संसरति निरुपभोगं भावैरधिवासितंलिङ्गम्" सांख्यकारिका ४०। आत्मानं देहेनैकीकृत्य स्वर्गनरकमार्गयोः सरति पुरुषो जीवो येन संसारः' सर्वदर्शनसङ्ग्रहः पृ० सं० ४२ केचन-अज्ञानमेव संसारं व्याहरन्ति, केचिच्च विश्वशब्देन तं संसारं व्यवहरन्ति, केचित्तु सङ्गतिमेव संसारं वदन्ति इत्यादिना नानारूपेण व्यवह्रियमाणः संसारः।

इदानीं संसारोत्तरणं कथं स्यादिति निरूप्यतेः– एतादृशमेव प्रश्नं कश्चिच्छिष्यः स्वीयंगुरुं प्रति कृतवान्। तदाह—

असारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति ?
गुरो कृपालो कृपया वदैतद्विश्वेशपादाम्बुजदीर्घनौका॥

अस्मिन् श्लोके गुरुणा भक्तिरूपात्मकमुत्तरं दत्तम्। भक्तिश्च प्रकृते ज्ञानलक्षणा। यद्यपि भक्तेर्नानाविधा अर्थाः सन्ति। तत्रैके मानसिकीं क्रियामेव भक्तिपदार्थं ब्रुवन्ति।

गारे च ज्ञानलक्षणामेव भक्तिं वदन्ति । अन्ये तु इतोऽप्यतिरिक्तामेव अर्थात् ज्ञानतोऽप्युच्चकोटावधिरूढां भक्तिं प्रतिपादयन्ति । इयमेवोच्चकोटिका भक्तिर्भगवतो हनुमत आसीत् । अस्या एव भक्तेर्ज्ञानरूपायाः प्रभावाद् भगवतोहनुमतो व्यक्तित्वं सर्वोच्चकोटिकं जातम् । तथा चोक्तं 'ज्ञानिनामग्रगण्यम्' इत्यादिना सकलगुणनिधानभूता भगवान् हनूमान् ज्ञानिनामप्यग्रगण्यो जातः ! तेनैव च तस्याजरत्वममरत्वमभयञ्चैव प्राप्तम् । गीतायामपि स्वयमेव भगवान् नन्दनन्दनः श्रीकृष्णचन्द्रोऽर्जुनं प्रत्याह यत् सुमेरुपर्वतं लङ्घतो मानवस्य बालुकाकणलङ्घनवदपारपारं पापसागरं सन्तरतस्तवार्जुनस्य द्रोणाचार्यप्रभृतिवधजन्यं पापलवलतरणं नितान्तमविचार्यमेव, अतः पुनरागतकार्यभूतसुख दुखरूपं महासागरं तर्तुमिच्छतो मानवस्य ज्ञानमेव सम्पादनीयम् । तेनैव विद्वान् महापातकोपपातकतत्समदुष्कृतमलिनीकरणसङ्करीकरणप्रभृतीनि सर्वाण्यपि पापानि इतोऽप्युग्रतमानि भूतभविष्यद्वर्तमानकालिकानि यानि सन्त्यन्यानि पापानि तानि समस्तान्येव ज्ञानलवेनैव तरति । अर्थात् नौकातः समुद्रतरणे जातेऽपि कश्चिद् विलम्बः, परन्तु ज्ञानं पापनिबर्हणे बहुकालं नापेक्षते क्षणेनैव सर्वपापं विध्वंसयति । यथा लघुकाष्ठैः प्रज्वलनेन प्रवृद्धाग्निः क्षणेन काष्ठानि भस्मीकरोति, तथैवानवरतध्यानसमाधिभिर्भोक्तृत्वादि समिद्धो ज्ञानाग्निः पुण्यपापमिश्रितान्यपि समस्तानि कर्माणि क्षणाद् भस्मीकरोति । अर्थात् निष्क्रियब्रह्मात्मत्वज्ञानं तदावरकज्ञाननिवर्तनेन सहैव ज्ञानिनस्तदुद्भावितकर्तृत्वभ्रमं सर्वथा विध्वस्य तत्संभावितानि समस्तान्यपि कर्माणि अविलम्बेनैव निर्मूलयतीत्यर्थः । तथाह गीतायां भगवता श्रीकृष्णेन-सर्वज्ञानप्लवेनैव वृजिनं संतरिष्यसि' ।४।३६। अपि च

यथैधांसि समिद्धोऽग्निर्भस्मात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ४।३७।

एतानि सर्वाण्येव भगवदुक्तानि प्रमाणानि ज्ञानस्यैव संसारोत्तरणे कारणतां व्यवस्थापयन्ति साधयन्ति च । भक्तिरपि ज्ञानस्वरूपा सत्येव  भवति । यतस्तावदज्ञानापरपर्यायभूता माया स्वीयावरणविक्षेपात्मकशक्तिद्वयद्वारा ज्ञानरूपं ब्रह्माच्छादयति । अखण्डब्रह्माकाराकारितान्तःकरणस्य वृत्तौ जायमानायामज्ञानरूपमावरणं सर्वथा निराकृतं भवति । एवं भेददृष्टिर्द्वैतदृष्टिश्चेति दृष्टिद्वयमपि स्वयमेव निराकृतं भवति ? यतोद्वयोरेवाज्ञानरूपत्वादज्ञानजन्यत्वात् तथा चोक्तं 'भेददृष्टिरविद्येयम्' मु० उ० ५।११३। इत्यत्र भेदे द्वैते च निरसिते सति अस्य साधकस्य ब्रह्मविद्यते सर्वत्र ब्रह्मात्मैवाभूत् तत्केन कं पश्येत् । उक्तञ्च यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् 'यत्र हि द्वैतमिव भवति तत्रेतर इतरं पश्यति' बृ० उ० ४।५।१५।६ आत्मलाभान्न परं विद्यते' इति स्मृतिराह-'स मोदते मोदनीयं हि लब्ध्वा' कठोपनिषत् १।२।१३। भगवता श्रीकृष्णेनापि स्वयमुक्तम्—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुखेन गुरुणाऽपि विचाल्यते ॥
गीता ६।२२।

सर्वं दुखं विवेकिनः' इत्याचार्यवचनेन सर्वस्यापि चराचरात्मकस्य जगतो दुःखरूपत्वात्तन्न विचालयितुं शक्नोति ब्रह्मविद्यतिपुरुषं, तस्य स्वयं ब्रह्मरूपत्वात्, ब्रह्मणश्च ज्ञानरूपत्वात् । 'ज्ञानादेव हि कैवल्यम्' 'ऋते ज्ञानान्न मुक्तिः' 'ब्रह्मवित् पुरुषः कैवल्यमधिगच्छति' 'ज्ञानेनैव संसारविनाशो न कर्मणा' स० रहस्योपनिषत् ३५ 'ज्ञात्वा देवं सर्वपाशापहानिः' श्वेतोपनिषत् १।११। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ३।८। अपि च अज्ञानादेव हि संसारो ज्ञानादेव विमुच्यते' योगतत्त्वोपनिषत् १।१६। अन्यच्चापि—

'संसारदुखतप्तानामामात्मज्ञानामृताम्भसा ।
तापशान्तिर्नचान्येन सत्यमेव न संशयः ॥
सूत संहिता

'न हि ज्ञानेनसदृशं पवित्रमिह विद्यते' गीता ४।३८

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ १४-२०।

एवञ्चेत्यादिप्रमाणैर्ज्ञानस्यैव संसारोत्तरणे कारणत्वं सिद्ध्यति । ज्ञानातिरिक्तं न किमपि संसारोत्तरणे कारणं ... तेनैवात्यन्तिकी ऐकान्तिकी च तापशान्तिर्जायते ।

# संस्कृतकाव्यानि

— वि० कृष्णस्वाम्यय्यङ्गार्यः

पीठिका :—पाश्चात्यास्तावत् क्रियाप्रधानस्य विज्ञानस्य ( Merteialscience ) सर्वास्वपि शाखासु सर्वतोमुखं संपूर्णं पाण्डित्यमवाप्य स्वयं विनिर्मितानामाधुनिकानां यंत्रोपकरणानां साहाय्यकेन समुत्कृष्टमैहलौकिकं सुखं समपादयन्। एतादृशी च देशान्तरेष्वनवाप्तावकाशा वैज्ञानिकी प्रगतिस्तान् कृतिप्रधानाभिर्भावनाभिरारब्धोद्योगान् पाश्चात्यान् सम्यगनुजग्राह, यतस्ते समग्रमपि विश्वमचिरेणैव रायुधैर्विजित्य स्वायत्तमकार्षुः। राजकीयमधिकारमात्मसात्कृतवन्तश्च पश्चात् ज्ञानप्रधानेषु साहित्यादिषु क्षेत्रेष्वात्मीयानामेव मार्गदर्शकतां व्यवस्थापयितुमयतन्त। नवीना नागरकता पाश्चात्यानामनुस्यूतेन सम्पर्केण पराधीनेषु देशेषु सर्वत्र प्रससार। राजकीयं दास्यमनुभवन्तो हि भारतीया अपि परेषामनुकरणमस्माकमभिमतानि संविधास्यतीति भ्राम्यन्तिस्म पाश्चात्यानामधिकारिणां करुणाकटाक्षपातादृते जीविकानिर्वाहस्यातीव कष्टसाध्यतामाकलय्य तेषां वेषभाषाभूषादिकमनुकर्तुमारेभिरे। ऐहिकस्य सुखस्य समृद्धिं विना कथञ्चिदप्याध्यात्मिक्यो भावना न बुद्धिदर्पणे प्रतिबिम्बिता भवन्ति। पारलौकिकस्य श्रेयसः स्मरणमपि कुक्षिपूरणादनन्तरमेव समुदेतीति वेदान्तविदुषामुक्तिमनुसृत्य भारतदेशः परकीयान्विचारानेव बहुमन्यमानः स्वकीयानां पूर्वेषामाचार्याणामुत्कर्षं विसस्मार। आत्माभिमानस्य स्वयंप्रकाशं ज्योतिस्सपदि दुष्प्रधर्षस्यान्धतमसस्याभिभवेन विनाशमुपायासीत्। परकीयानामादर्शरूपतयाऽध्यवसानमस्मदीयानामवहेलनञ्च निर्वाधमाभिववृधे। विदेशीयविद्याभ्यासेनैवाधिकारप्राप्तिं सम्भावयन्तो जना संस्कृतभाषायास्तिरस्कारमावश्यकं मेनिरे। गीर्वाणवाण्याः क्लेशसाध्येनाप्यध्ययनेन निश्चितफलावाप्तेरदर्शनात्तत्राप्रवृत्तिः स्वाभाविकी बभूव। आत्मीया संस्कृतिरत्युत्तमा, न कदाऽपि भारतीयाः परेषां मार्गमत्रानुसर्तुमर्हन्तीत्येषाभावना यद्यपि सनातनं धर्मं सद्यः परित्यक्तुमनुत्सहमानेषु वैदिकमताभिमानिषु तस्मिन्नपि दुष्काले जागर्ति स्म, तथाऽपि तादृशानां धर्मप्रेमिणां धनजनबलवैकल्यात् राजकीयेषूद्योगेषु कथमप्यप्रवेशाच्च बहवो भारतीयाः परेषां मोहनास्त्रस्य सुखेन भेद्यानि शरव्याण्यभूवन् धर्मस्य महिमा किञ्चिदिव क्षीणदशामधिजगाम। प्रलोभनानामनेकेषामुपलेपादाकृष्टचित्ता दरिद्रा भारतीया वंशक्रमपारम्पर्येण प्राप्तामपि प्राचीनायास्संस्कृते रत्नदर्पणायमानामपि गीर्वाणवाणीमवधीर्य विदेशीयानामपरिचितामतिक्लिष्टामांग्लभाषामध्येतुमुपचक्रमिरे। उदरभरणस्येयं दुष्पूरा समस्या, यया हि सनातनो नो विद्याभिमानस्संप्रणनाश।

दिने दिने क्रमेण क्षीणतामुपयान्तीमपि गीर्वाणभाषां न कश्चिद्भारतीयस्सेवारसज्ञोऽपि पुनरभिवर्धयितुमुदयतत। शास्त्रव्यासङ्गस्याल्पतया ग्रन्थरचनायामप्यसमर्था विद्वान्सो बभूवुरर्वाचीनाः। अवधानेनाभिमानेनोत्साहेन च साकं शास्त्राणामध्ययनमकुर्वन्तो जीविकामात्रदत्तदृष्टयो विद्वान्सः कथं नु ज्ञानमभिवर्धयितुं शक्नुयुः? पात्रेसमितानामेतेषामैकमत्येन विद्याप्रसारं स्वकीयस्य धर्मस्य परिरक्षणं

परकीयाविद्यायामव्यामोहञ्च साधयितुं न काचिदपि शक्तिरासीत्। शरीरपोषणमेकममीषां लक्ष्यमभवत्, यदपि सम्यक्तया साधयितुमनलम्भविष्णवः संसारो निस्सारः क्लेशमय इतीमामुक्तिं यथार्थयामासुः। तस्मादेव संस्कृतसाहित्यविषये भारतीयाः प्राथमिकीं विमर्शप्रवृत्तिं नाङ्गीचक्रिरे। पाश्चात्यानां गवेषणाकार्येण कवीनामास्माकीनानां कालदेशादिके विषये यथाकथंचिदुपलब्धैरान्तरैर्बाह्यैश्च प्रमाणैर्निर्धारिते भारतीयानामप्युन्मिमीलितुर्विलोचने। व्यलिख्यन्त पक्षमण्डनखण्डनादयो विमर्शात्मका विलेखाः। कालिदासादीनां संस्कृतकवीश्वराणां कालदशादि यथावद्विजिज्ञासवः पाश्चात्यानामुक्तिषु युक्तिभिरुपस्कृतासु प्रामाण्यमनुसन्दधाना अपि स्वतंत्रतया विमर्शमेवारमाणा विद्वान्सः सर्वेऽप्यभिरोचयामासुः। ततः प्रभृति भारतीयैरपि प्रौढपत्रिकासु लेखनानि बहूनि विलिख्य, ग्रन्थाश्च प्रकटयित्वा वादभूममवतीर्य विजयोऽप्यलभ्यत।

पाश्चात्यास्तावत् कारणान्तरैस्संस्कृतसाहित्यव्यासङ्गमावश्यकमभिज्ञाय विमर्शकार्यमारभन्त। "भारतीयानां परिचितानि मनुप्रभृतीनां धर्मव्यवस्थापकानामनुशासनानि स्वाभिमतानां नियमानामविरोधेन संमिलितानि चेत्कार्यक्षेत्रमवतार्यन्ते तर्हि सत्यमेव भारतीयानामतृप्तिर्दूरतो निरस्तुं शक्येत। अन्यथा परकीयस्य राज्यभार (Administration) स्य क्रममनुचितममांगल्यञ्च जानन्तो भारतीया धार्मिकेनाभिमानेनास्माकमविधेयास्सन्तो राज्यविप्लवमुपक्रमेरन्। तेषामेव धर्मशास्त्राणि विमृश्य तदनुगुणानेव नियमानविरचयत्तु न कोऽप्यस्मासु द्वेषं प्रकटीकरिष्यति। अतस्तदीयानि मनुस्मृत्यादीनि धार्मिकानि प्रमाणान्यवश्यमध्येतव्यानी" ति वारन्हेस्टिंग्साख्यो राजप्रतिनिधिरभिप्रेयाय। संस्कृतभाषाविशारदांश्च ब्राह्मणानस्मिन्कार्ये व्यापारयामास। भृतिस्वीकारबद्धतृष्णाः परकीयभाषायामपि पाण्डित्यं संपादितवन्तस्ते द्विजातयस्तत्कार्यं सद्यः स्वीचक्रुः। बहवश्च धर्मग्रन्थाः पर्षियाभाषाद्वारा, आगल्यां परिवर्तिताः। तदा पाश्चात्या अपि संस्कृतभाषाया अस्तित्वं विज्ञाय वैदिकं साहित्यमस्यामुपलब्धमवेक्ष्य विस्मितान्तःकरणाः स्वयं विमर्शकार्यमाद्रियन्त। पश्चात्काव्यानि चम्पूर्नाटकानि च यथाकालमुपलभ्य कृतार्था बभूवुः। एतावता भारतीयानां पाश्चात्यानाञ्च साहित्यचरित्रलेखने कथं प्रवृत्तिरुदपद्यतेति संग्रहेण निरूपितम्। विस्तरस्तु ग्रन्थान्तरेषु बहुधा कारणानां वर्णनात्तत्रैव द्रष्टव्यः। पाश्चात्यानां प्रथमस्सम्पर्कः ख्रो० पू० ३२७ वर्षे ग्रीकवीरस्यालक्सान्द्रस्याभियोगादनन्तरं समभवत्। ग्रीकाश्च यद्यपि ज्यामितिर्वैद्यशास्त्रं गणितं वेदान्त इत्यादिषु शास्त्रेषु भारतीयानां सकाशात् ज्ञानराशिमेव संपूर्णमाजह्रुरित्यनुचितमभिधातुम्, तथाऽपि संस्कृतभाषायामुपनिबद्धान्ग्रन्थानवेक्ष्यास्मासु गौरव ( honur ) बुद्धि प्रदर्शयन्तः कांश्चनोपयुक्तान्विषयानस्मत् व्यज्ञासिषुः। मध्यकाले त्वराब्देशीया भारतीयं विज्ञानं पाश्चात्यदेशेषु प्रसारयामासुः। षोडशशतकादर्वाक् पाश्चात्या धर्मोपदेशका भारतमागम्य संस्कृतसाहित्यस्यास्तित्वमवगम्य महान्तं व्यासगमप्यकाषुः। अत्र च 'अब्रहाम् रोजर्" नाम्ना डच्भाषायां परिर्तितं भर्तृहरेः काव्यं निदर्शनमुपादातुं शक्यते। परन्तु पाश्चात्येषु संस्कृतसाहित्यमधिकृत्य कुतूहलमधुना सार्धवर्षशतकात्प्रागेव जनिमलभत न तु ततोऽपि प्राक्। बहवश्च सर् विलियम् जोन्स्, हेन्रि थामस् कोल्ब्रूक्प्रभृतयः पाश्चात्यपण्डितप्रकाण्डाः संस्कृतसाहित्यमध्येतुमुत्सुकाः बभूवुः। तत्र गीर्वाणभाषायां दृष्टानमूल्यान् ग्रन्थान्परिवर्तयन्तः, संस्कृतभाषायास्सत्कर्षमुपवर्णयन्तश्च ते परःशत ग्रन्थान्व्यरचयन्। वयं त्वत्र संस्कृतकाव्यानां समवायमुद्दिश्य किञ्चिद्विमृशामः। (क्रमशः)

# जैनदर्शने जीवद्रव्यम्

श्रेयांश कुमारो जैनः

भारतवर्षेऽस्मिन् प्रवाहरूपेणाचारविचारसम्बन्धात् द्वे परम्परे प्रचलिते स्त । आचारपक्षस्य (आचरणपक्षस्य) कार्यं धार्मिकैः सम्पादितं, विचारपक्षस्य भारः चिन्तकमनीषिभिः परिगृहीतः परिचालितश्च । फलतः आचारस्य परिणतिः "धर्म" रूपेण प्रादुर्भूता तथा विचारस्य सरणिरेव दर्शनमिति नाम्ना ख्याता ।

दर्शनमिति शब्दस्य सामान्योऽर्थः चक्षुर्व्यापारः = अवलोकनम् दृश् + ल्युट् इति व्युत्पत्त्या अर्थात् ज्ञानेन्द्रियविषयसम्पर्कात् विषयस्य प्रत्यक्षज्ञानम् ।

भारतीयानां पुरतः 'दुःखात् संत्राणम्' एव प्रधानं प्रयोजनमासीत् । अस्य प्रयोजनस्य सिद्धिहेतोः विभिन्ना दार्शनिकमतनिर्झरिण्यः प्रादुरभूवन् पुराकाले । इमाः निम्नरूपेणावगाहितुं शक्यन्ते ।

(१) चार्वाक सरणिः, (२) जैनसरणिः, (३) बौद्धसरणिः, (४) सांख्यसरणिः, (५) योगसरणिः, (६) न्यायसरणिः, (७) वैशेषिकसरणिः, (८) पूर्वमीमांसा (९) उत्तर मीमांसा ।

उपर्युक्ताः सरण्यः मनीषिभिः आस्तिकनास्तिकभेदात् द्विधा विभक्ताः । उपर्युक्तेषु दर्शनेषु सांख्यादयः षट् वैदिकपक्षीया आस्तिकाः तथा चार्वाकादयः त्रयो नास्तिका इति कथ्यन्ते ।

परमस्मदीये मते त्वेतद्वर्गीकरणं समीचीनं नैवास्ति—यतोहि—"अस्तिनास्ति दिष्टं मतिः"—पा० ४।४।६० इति पाणिनिसूत्रानुसारं यः स्वर्गस्यास्तित्वं मन्यते सैव आस्तिकः नास्तिकस्त्वपरः अनस्तित्वमतानुयायी । अस्तु ईदृक्कृते सत्यर्थे जैनबौद्धादीनि दर्शनानि नास्तिकानीति वक्तुं न शक्यते ।

कैश्चित् आधुनिकैः दार्शनिकैः बौद्धन्यायसांख्यजैनवैशेषिकजैमिनीया[1] इति षड्दर्शनानि परिकल्पितानि । जैनदर्शनं भारतीयदर्शनानां समन्वितसाररूपमस्ति । दर्शनेऽस्मिन् द्रव्यस्य महत्त्वपूर्णस्थानमास्ते । द्रव्यमुत्पाद-व्यय-ध्रौव्ययुक्तं[2] भवति, गुणपर्ययवदपि ।[3]

अस्य प्रमुखाः षड्भेदाः सन्ति—

(१) जीवः (२) पुद्गलः (३) धर्मः (४) अधर्मः (५) आकाशः (६) कालः ।

दर्शनेऽस्मिन् 'जीव'द्रव्यम् स्वतन्त्ररूपेणावस्थितम् । अस्य विविधाः पर्यायवाचिनो शब्दाः—

जीवः[4] प्राणी, जन्तुः, क्षेत्रज्ञः, पुरुषः पुमान्, आत्मा, अन्तरात्मा, ज्ञः, ज्ञानी चेति ।

जीवस्य ( आत्मनः ) सामान्यलक्षणमुपयोगः[5] विद्यते । "उपयोग" इति शब्दस्य द्वौ अर्थौ—ज्ञानञ्च दर्शनञ्च ज्ञानोपयोगोऽपि द्विधा भवति-स्वभावज्ञानात्मकः विभाव-

---

(१) दर्शनानि षडेवात्रमूलभेदव्यपेक्षया····षड्दर्शनं समुच्चय मूल २ बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा । जैमिनीयं च नामानि ·········॥ षड् दर्शन समु० ३

(२) "उत्पादव्ययध्रौव्ययुक्तं सत्" तत्वार्थसूत्र ५।३०

(३) 'गुणपर्ययवद् द्रव्यम्' त० सू० ५।३८

(४) जीवः प्राणी च जन्तुश्च क्षेत्रज्ञःपुरुस्तथा ।
पुमानात्मान्तरात्मा च ज्ञो ज्ञानीत्यस्य पर्ययः ॥
महापुराणम् २४:१०३

(५) जीवो उव ओगम ओ उव ओगो णाणदंसणो होई ।
णाणुव ओग्णे दुविहो सहाववणाणं विभावणाणन्ति ॥
नियमसारः १०

ज्ञानात्मकश्च । यत् 'केवली'[१] ( निरुपाधिकं ) इन्द्रियातीतम् असहायञ्च अर्थात् प्रत्येकं वस्तुषु व्याप्तं तत्स्वाभावज्ञानमिति । पुनः विभावज्ञानमपि सज्ज्ञानमसज्ज्ञानमिति रूपेण द्विधा भवति । सज्ज्ञानं चतुर्धा—मतिज्ञानम्, श्रुतज्ञानम्, अवधिज्ञानम्, मनःपर्ययज्ञानञ्च । कुमतिकुश्रुतकुवधि इति भेदेनासज्ज्ञानमपि त्रिप्रकारकम् ।

एवं दर्शनोपयोगोऽपि[२] द्विप्रकारकः—स्वभावदर्शनोपयोगः विभावदर्शनोपयोगश्च । यत् इन्द्रियाग्राह्यमसहायञ्च तत्केवलं दर्शनं स्वभावदर्शनोपयोग इति कथ्यते । चक्षुदर्शनमचक्षुदर्शनमवधिदर्शनञ्च इमानि विभावदर्शनोपयोग इत्युच्यन्ते ।

ज्ञानदर्शनरूपात्मकमुपयोगमयः जीव एवात्मा । चैतन्यगुणयुक्तश्च । अकलङ्कदेवेनोक्तम्—

दशसु प्राणेषु यथोपात्तप्राणपर्यायेण त्रिषु कालेषु जीवनानुभवनात् जीवति, अजीवीत् जीविष्यति वा जीवः । ( राजवार्तिक १।४।७।२५।२६ ) नेमिचन्द्राचार्येण द्रव्यसंग्रहे निगदितम्—जीवः[३], उपयोगमयः, अमूर्तः, कर्त्ता, स्वदेहपरिमाणमात्रकः, भोक्ता, संसारस्थः सिद्धः तथा स्वभावेनैवो्र्ध्वंगमनशीलः ।

जैनदर्शने जीवस्य ( आत्मतत्त्वस्य ) स्वरूप-प्रतिपत्तिः सर्वेषां दर्शनानां परिसरे व्यपदिष्टा । अस्यस्वरूपसम्बन्धि प्रत्येकं विशेषणं विविधदर्शन्संबन्धितमस्ति ।

चार्वाकमते जीवस्य ( आत्मतत्त्वस्य ) स्वतन्त्रमस्तित्वं नास्ति । तस्मिन् हि शरीरमेवात्मा । जैनदर्शने तु जीवः सदैव जीवति सो न कदापि नश्यति । तस्यमूलगुणं चैतन्यं यत् तद्वदेवाद्यन्तरहितम् । जीवस्य-व्यावहारिकाः प्राणाः अपि भवन्ति । ये पर्यायानुसारिपरिवर्तमानास्तिष्ठन्ति । दशप्राणाः, पञ्चज्ञानेन्द्रियाणि मनोबल-वचनबल-कायबल-श्वासोच्छवासायुश्चापरे प्राणाः । इमे दशप्राणाः मनुष्यपतत्रिपशुदेवनारकीयेषु समरूपेणावतिष्ठन्ति । नव प्राणाः असंज्ञीपञ्चेन्द्रियाणामष्टप्राणाः चतुरेन्द्रियाणां सप्तप्राणाः त्रीन्द्रियाणां षड्प्राणाःद्वीन्द्रियाणां चत्वारः प्राणाः एकेन्द्रियाणां जीवानां भवन्ति ।

योनिभेदेन प्राणानामपि परिवर्तनं प्रचलति । शरीरस्य तु परिवर्तनं प्रचलत्येव परं चैतन्यं न विघटत । अतएव "आत्मा" शरीरापेक्षया भौतिकः चेतनाऽपेक्षया अभौतिकः ।

नैयायिकवैशेषिकदर्शनमतावलम्बिनः आत्मानं ज्ञानाधाररूणं मन्यन्ते, परं जैनदर्शने आत्मा आधारः ज्ञानमाधेय इति आधाराधेयसम्बन्धः न स्वीक्रियते । आत्मा ज्ञानस्वभावात्मकः यथा—अग्निः उष्णस्वभावात्मकः । स्वस्य भिन्नज्ञानेन "आत्मा" कदापि ज्ञानी न भवितुं शक्नोति ।[४]

मीमांसकाः भट्टमतानुयायिनः चार्वाकाश्च-आत्मा मूर्तः पदार्थ इति कल्पन्ते, किन्तु जैनदर्शनस्येयं मान्यता यत् पुद्गलो मूर्तपदार्थः । अस्मिन् ये गुणाः विद्यन्ते 'आत्मा' तेभ्य विरहितः । उक्तञ्च—

---

(१) नियमसारः ११–१२

(२) तह दंसण उव ओगोससहावेदरवियप्पदो दुविहो ।
केवलमिंदियरहियं असहायं तं सहावमिदि भणिदं ॥
नियमसारः १३

चक्खु अचक्खू ओही तिण्णिवि भणिदं विभावदिच्छित्ति ।
पज्जोओ दुवियप्पो सपरावेक्खो य णिरवेक्खो ।
नियम० १४

(३) जीवो उव ओगमओ अमुत्तिकत्ता सदेहपरिणामो ।
भोत्ता संसारत्थो सिद्धो सो विस्ससोड्ढगई ॥
द्रव्यसंग्रह २

(४) जीवो णाणसहावो जह अग्गी उह्णवो सहावेण ।
अत्थंतरभूदेण हि णाणेण ण सो हवे णाणी ।
कार्तिकेय० १७८

अरसरूवमगन्धं अव्वत्तं चेदणागुणमसद्दं ।
जाण अलिंगग्गहणं जीवमणिद्दिट्ठसंठाणं ॥[१]

जीवः रस रहितो, रूपरहितो, गन्धरहितः स्पर्शरहितः शब्दरहितः पुद्गललिङ्गेनाग्राह्यः आकारानपेक्षी चैतन्यगुणवानिति ज्ञेयः। एवं विध एष 'अमूर्तः' अस्ति तथापि अनादिकालात् कर्मभिः सम्बद्धः अतएव व्यवहारदृष्ट्यायं मूर्त इत्यपि कथितुं शक्यते। शुद्धस्वरूपापेक्षया अमूर्तः कर्मबन्धापेक्षया मूर्तश्च। यदि जीवः सर्वथा मूर्तरूपेण स्वीक्रियेत तर्हि तस्यास्तित्वमपि व्यपगतं भविष्यति एष पुद्गलतः विविक्तो न भविष्यति। एतावताऽयं कथञ्चित् मूर्तः कथञ्चिदमूर्तः।

भारतीयदर्शनेषु अस्य आकारसम्बन्धनेऽपि मतवैभिन्यं वर्तते। न्यायवैशेषिकसांख्यमीमांसादयो दर्शनचणाः जीवस्यानेकत्वं स्वीकृत्य तं सर्वव्यापकं मन्यन्ते। तेषां कथनं यद् 'आत्मा' आकाशवत् सर्वव्यापकोऽस्ति। उपनिषत्सु आत्मतत्त्वस्य सर्वगतत्वं सर्वव्यापकत्वं[२] प्रदर्शितम्। तथाहि अंगुष्ठ-[३]मात्रत्वमणुमात्रत्वमपि निर्दिष्टम्। परं जैनदर्शने तु आत्मप्रदेशानां दीपकप्रभाणामिव सङ्कोचेविस्तारे संभवतिसति सः (जीव) लघुबृहत्शरीरभाग्भवति यथाक्रमम्। अर्थात् हस्ती शरीरे तस्यप्रदेशानुसारंविस्तारभाक्भवति, पिपीलिका देहे सए संकोचभाग् भवति। उक्तञ्च—

जह पउमरायरयलं खित्तं खीरे पद्मासयदि खीरं।
तह देही देहत्थो सदेहमित्तं पद्मासयदि ॥ पञ्चास्किायका० ३३

यथा क्षीरे सन्निहितः पद्मरागमणिः तं स्वप्रकाशेन रञ्जयति तद्वत् देहस्थः आत्माऽपि स्वीयं देहं स्वरूपेणैव प्रकाशयतीति। तात्पर्यतः सः स्वदेह एव व्यापकः। अतः जीवः (आत्मा) स्वदेहपरिमाणात्मकः किन्तु एषा स्थितिः समुद्घातदशाऽनन्तरवर्तिनी। समुद्घाते तु जीवस्य प्रदेशाः शरीरबाह्येऽपि प्रसृताः भवन्ति। किं बहुना यावल्लोके व्याप्ताः भवन्ति। एतस्माद्हेतोः दर्शनेऽस्मिन् आत्मा (जीवः) कथञ्चित् व्यापकः कथञ्चिदव्यापकश्च स्वीकृतः।

सांख्यदर्शनं तु आत्मानं कर्तृरूपेण न स्वीकरोति अपितु भोक्तारमेव मन्यते। एत मते तु पुरुषः (आत्मा) साक्षी[४] एवास्ति। कर्तृत्वं तु प्रकृतौ एव पुरुषस्तु निष्क्रियः। परं जैनदर्शने आत्मा व्यवहारनयेन च स्वीयज्ञानदर्शनादिशुद्धभावानां कर्त्ताऽस्ति। उक्तञ्च—

कत्ता सुहासुहाणं कम्माणं फल भोयओ जम्हा।
जीवो तप्फल भोया भोया सेसा ण कत्तारा ॥ वसु० श्रा० ३५

जीवः शुभाशुभकर्मणां कर्ताऽस्ति यतोहि तेनैव तेषां फलमुपभुज्यते। एतदतिरिक्तमपि किमपि द्रव्यं न तु कर्मणां भोक्ता न वा कर्त्ता। कर्तृत्वभोक्तृत्वयोर्नास्ति कश्चित् विरोधः। यदि जीवस्य भोक्तृत्वं स्वीक्रियेत तर्हि तस्य कर्तृत्वमपि सुतरां स्वीकरणीयः। अतःस्वयं एकया दृष्ट्या कर्त्ताऽस्ति अपरदृष्टया च कर्त्ता।

बौद्धदार्शनिकाः क्षणिकवादानुसारिणः सन्ति इति कृत्वा ते कर्तृत्वभोक्तृत्वयोर्मध्ये ऐक्यं न स्वीकुर्वन्ति। यद्यात्मा कर्मफलस्य भोक्ता न स्वीक्रियेत तर्हि तस्य फलमपि कर्त्तारं न मिलिष्यति। अन्यमेव मिलिष्यति। एवमव्यवस्था भविष्यति। अतः आत्मा स्वीयकर्मणामवश्यमेव भोक्ताऽस्मिन् विषये नास्ति काचित् विप्रतिपत्तिः। सिद्धान्तेऽस्मिन् आत्मा सुखदुःखरूप पुद्गलः कर्मणां भोक्ता व्यवहारदृष्टया अस्त्येव सःस्वीयचेतनभावानामेव भोक्ता। अस्तु एष कथञ्चित् भोक्ता कथञ्चिदभोक्ताऽस्ति।

सदाशिवदर्शनमतानुयायिनो मन्यन्ते यदात्मा कदापि सांसारिको न भवति, सः सर्वदा शुद्धोभूत्वैव तिष्ठति। कर्मणां तस्योपरि कश्चित् प्रभावो नायाति। सन्दर्भेऽस्मिन्नपि जैन-

(१) प्रवचनसारः २-८०
(२) सर्वव्यापिनमात्मानम् श्वे० १।१६
(३) अङ्गुष्ठमात्रपुरुषः श्वे० ३।१३
(४) तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरु कैवल्यं माध्यस्थ्यं द्रष्टृत्व ॥ सांख्यकारिका ९

दार्शनिकानां किञ्चित् मतवैभिन्यं वर्त्तते। तेषां मते प्रत्येको जीवः प्रथमम् सांसारिको भवति, अनन्तरं मुक्तावस्थां लभते। सांसारिको जीवोऽशुद्धः। अनादिकालादशुद्धो भूत्वा संतिष्ठते किन्त्वयं यदा शुक्लध्यानबलात् कर्मणां पूर्णक्षयं करोति तदा मुक्तिम् प्राप्नोति। पुरुषार्थेन शुद्धो भवति एषः। यदि प्रागयं सांसारिको न स्यात्तर्हि कथमेष मुक्त्यै प्रयतेत ? एतावता जीवः सांसारिकोऽस्ति परं व्यवहारदृष्ट्या। शुद्धनयेन सर्वेजीवाः शुद्धा एव। एवं जैनदर्शनं जीवम् एकया दृष्ट्या विकारिणं स्वीकृत्य अपरदृष्ट्या अविकारं स्वीकरोति।

भट्टदार्शनिकाः मुक्तिं न स्वीकुर्वन्ति। तेषां मते तु आत्मनः चरमादर्शः स्वर्ग एवास्ति। आत्मा सदा संसारी एव भवति। तस्य मुक्तिर्भवत्येव न। तर्हि किं मुक्तिपरिकल्पनया ? चार्वाकास्तु एतेषामपि अग्रगामिनः सन्ति। ते त्वात्मनमपि निराकुर्वन्ति। स्वर्गमोक्षपरिकल्पनयाऽपि ते दूयन्ते। कथं मुक्तिं स्वीकरिष्यन्ति ?

परमस्मदीये मते ज्ञानावरणाद्यष्टकर्माणि समूलमुत्पाट्य संसारी एव जीव सिद्धो भवति अतः सिद्धस्वरूपनिर्धारणे श्री कुन्दकुन्दाचार्याः नियमसारे कथयन्ति—

"निक्कम्मा अट्ठगुणा किंचूना चरमपेहदोसिद्धा।
लोयग्ग-ठिदा णिच्चा उप्पादवएहिं संजुत्ता"॥

जीवस्य सांसारिको भावः मुक्तभावो द्वावपि तर्कसम्मतौ। अस्तु, जैनदर्शने केचन जीवा अभव्याः अवश्यमेव भवन्ति। एतेषां मुक्तिर्न भवति। परं इमेऽपि सिद्धा भवितुं शक्नुवन्ति।

माण्डलिकस्य कथनं यज्जीवः निरन्तरो गतिमान् सः कुत्रापि न स्थास्यति सर्वदा चलन्नेवास्ते।

जैनदर्शने तु जीवमूर्ध्वगमनशीलं स्वीकृत्यापि तावत् गमनशीलो, यावत् धर्मद्रव्यस्यास्तित्वं विद्यते। तस्य वास्तविको स्वभाव ऊर्ध्वगमनम्। परमशुद्धदशायां कर्माणि यत्र यत्र चालयन्ति तत्र तत्रैवायं गच्छति। कर्मरहितोऽयमूर्ध्वमुद्गच्छति। लोकस्याग्रभागे गत्वा स्थिरीभवति। यतो हि तमुलङ्घ्य द्रव्यस्य गतिरेव नास्ति। अत उद्गामी भूत्वाप्ययं न निरन्तरं उद्गामी इयं जैनदर्शनस्य मान्यता।

उक्तविवेचनेन सुस्पष्टं भवति यज्जैनदर्शने जीवस्य (आत्मनः) स्वतन्त्रमस्तित्वं विद्यते। तत्सम्बन्धिनः सर्वे विशेषणाः सार्थकाः सन्ति एतन्नितरां निष्पन्नम्।

## पश्यन्ति ये नहि कृपां जगदम्बिकायाः

—आचार्यवर्याणां रामेश्वरझामहोदयानाम्

नित्यं सुखं बत विहाय पदं जनन्याः,
भ्रान्त्या भ्रमन्त्यतितरां हि विकल्पजाले।
आजन्मतो विविधकृच्छ्रत उद्धरन्त्याः,
पश्यन्ति ये नहि कृपां जगदम्बिकायाः॥

यस्याः शान्तौ शान्तिमभ्येति लोकः
क्षोभे क्षोभं क्षीणतां क्षीणतायाम्।
विश्वाराध्यां स्वात्मसंवित्तिमेकां
वन्दे देवीं कामये विश्वसिद्धिम्॥

# देवतात्मा हिमालयः

श्री विद्याधरो द्विवेदः

नानाविधौषधसम्पूरितोऽनेकरत्नरत्नाकरो महिमालयो हिमालयो हि भारतवर्षस्याविभाज्यमङ्गमास्ते। एतस्मादेव हेतोरस्य विस्तृतं प्रशस्तं च वर्णनं महाकविभिरकारि स्वकाव्यमहाकाव्येषु। कविकुलकैरव-कुमुदः कवितावनिताविलासो महाकविकालिदासोऽपि प्रकृति-क्रीडाङ्गणं भारतभुवं वर्णयन् महिमवतो हिमवतो देवतात्मत्वं प्रतिष्ठापयाञ्चकारेति स्पष्टमेव तस्य प्रकृतिप्रेमलुब्धत्वम्। नातिविस्तृतं महाकवेरस्य काव्येषूपन्यस्तं पर्वतराजस्यास्य वर्णनं प्रदर्श्यते—

हिमालयं कालिदासो बहु स्निह्यतिस्मेति कारणादेव तस्य सम्भवतः किमपि काव्यं तद्वर्णनाद् विरहितं नास्ति। कुमारसम्भवे तु हिमालस्य कुलमेव दर्शितम्। महाकाव्येऽस्मिन् हिमालयनन्दिन्या भवान्या जन्म, तपो, विवाहः, तत्कुमारस्य कुमारस्य जन्मप्रभृतीनि सालङ्कृतं समलङ्कृतानि। महाका-व्यस्यारम्भे एकस्मिनेवाऽद्वितीये निरवद्ये पद्ये हिमवतश्चित्रं सम्यगुट्टङ्कितम्—

"अस्त्युत्तरस्यां दिशि देवतात्मा,
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य,
स्थितः पृथिव्या इव मानदडः[1]॥"

श्लोकेऽत्र "स्थितः पृथिव्या इव मानदण्डः" इत्यनेनैत-त्सूचितं यदयं हिमालयो बहुशाखाप्रशाखाभि प्रसृतः पूर्व-सागरतः पश्चिमसागरं यावदभिव्याप्य भारतस्य रक्षकोऽस्ति संवृतः। देवतात्मत्वेनानेकदेवानामृषीणाञ्चापि निवासस्था-नत्वं संपुष्यति। नैतदेव प्रत्युत—

"यं सर्वशैलाः परिकल्प्य वत्सं,
मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधींश्च,
पृथूपदिष्टां दुदुहुर्धरित्रीम्॥"[2]

अर्थात् राज्ञः पृथो राज्ये पृथ्वी सारभूतानि रत्नान्यौष-धींश्च हिमालयाय ददौ। पुनश्च मेरुद्वारेणैतानि रत्नान्यो-षधयश्च पर्वतान्तराणि प्राप्ताः। श्लोकेनानेन ज्ञायते यत् रत्नौषधीनां दृष्ट्या यन्महत्त्वं हिमालयस्य तन्नास्ति सुलभं पर्वतान्तरेभ्यः।

एकतमेन श्लोकेनैवं निश्चीयते यन्महाकविकालिदासेन हिमालयः सम्यङ् निरीक्षित आसीत्—

"तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान्।
दृष्टः कथञ्चिद् गवयैर्विविग्नै—
रसोढसिंहध्वनिरुन्ननाद[3]॥"

अर्थात् कदाचनाभिमानघनो नन्दी हिमवति गर्जतः सिंहस्य ध्वनिमाकर्ण्य स्वखुराग्रं हिममयशिला उत्पाटयन् तदवलोकनव्यग्रान् गवयान् कुर्वाण उच्चैर्ननाद। एतेन ज्ञायते यत्तत्र पशवः स्वच्छन्दं विहरन्ति स्म।

रघुवंशमहाकाव्येऽपि हिमालयस्य वर्णनं कविना बहुत्राऽकारि। द्वितीये सर्गे दिलीपस्य गोचारणं विशेषेण-

---

१–कुमारसम्भवम्–१।१
२–कुमारसम्भवम्–१।२
३–कुमारसम्भवम्–१।५६

तत्पर्वतस्यैव गह्वरेषु समजनि। तत्रैव कामधेनुपुत्री नन्दिनी दिलीपं परीक्षते किन्तु तस्य दृढां भक्तिमवधार्य प्रसीदति तन्मनोरथञ्च सफलयति। कालिदासोऽत्र हिमालयस्यानुपमं सौन्दर्यं सङ्केतयति नन्दिनी गौरीगुरोर्हिमवत एतादृशं गह्वरं विशति यत् गङ्गाप्रपातान्तविरूढशष्पं विद्यते[१]। इतश्च दिलीपो नन्दिनीं हिंस्रैर्मनसाऽपि दुष्प्रधर्षां निरिक्षित्याद्रिशोभा-प्रहितेक्षणो जायते[२]। कविस्तत्र हिमालये देवदारूं, कैलास-गौरं वृषभं तत्तनयां पार्वतीं, कुमारञ्च वर्णयति।

चतुर्थे सर्गे महाराजरघुर्दिग्विजयप्रसङ्गेन प्राच्यप्रदेशान् विजित्य हिमालयाभिमुखं प्रस्थितस्तच्छैलमारुरोह—

"ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।
वर्धयन्निपतत्कूटानुद्धूतैर्धातु रेणुभिः[३]"॥

यत्रत्या राजान उपायनपाणयो रघुमुपस्थिताः सन्तस्त-त्सामर्थ्यमतुलं पराक्रमञ्च ज्ञात्वा स्वसर्वस्वं समर्पयाम्बभूवुः।

रघोः हस्तिनां ग्रैवेयकाणि हिमालयस्यौषधीनां पतितै-र्देदीप्यमानप्रकाशैरधिकां श्रियं दध्युर्येन रात्रौ दीपकानामा-वश्यकतैव न बभूव—

"सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः"॥[४]

कुमारसम्भवेऽप्येवमेवावर्णि कविना 'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः[५]'। एतेन ज्ञायते यद्धिमा-लये एवंविधा अप्योषधयः सन्ति या रात्रौ प्रकाशन्ते।

खण्डकाव्ये मेघदूतेऽपि कालिदासो हिमालयीयंममत्वं न जहाति प्रत्युत तत्रत्यामलकापुरीमेव स्ववर्ण्यविषयत्त्वेनाङ्गी-करोति। स्वाधिकारात् प्रमत्तः कश्चित् यक्षोऽलकातो निर्ग-मय्य प्रियतमाविधुरो रामगिर्याश्रमेषु प्रेष्यते। आषाढ़मासे मेघाच्छन्नं नभोऽवलोक्य व्याकुलो मेघमेव सन्देशहरं विधायालकां प्राहिणोत्। एतस्मिन्नेव प्रसङ्गे गतव्यं निदिशन् यक्षोऽलकां मानससरोवरं हिमालयञ्च वर्णयति—

सन्तप्तानां त्वमसि शरणं तत्पयोद प्रियायाः,
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां,
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या[६]॥"

श्लोकेस्मिन् धनपतेः कुबेरस्य प्रसिद्धनगर्या अलकायाः परिचयो दत्तः। नगरीयं मानससरोवरादप्यग्रे वर्त्तते इति पन्थानं निर्दिशता यक्षेण मेघं सम्बोध्य उक्तम्—

"कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां,
तच्छ्रुत्वा ते नयनसुभगं गर्जितं मानसोत्का।
आ कैलासाद् विसकिसलयच्छेदपाथेयवन्तः,
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः[७]॥"

अर्थात् हे मेघ! त्वद्गर्जितमाकर्ण्य मानससरोवरं गन्तुमनसो हंसा मध्येमार्गं तव सहायका भविष्यन्ति, त्वञ्चताननुसरन् कैलासं प्राप्स्यसि। एतेनेदमायातं यत् अलकायां प्राप्तेः पूर्वमेव कैलासपर्वतः प्राप्यते। ततो मानससरो वर्णितम्—

"हेमाम्भोजप्रसवि सलिलं मानसस्याददानः,
कुर्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य।
धुन्वन् कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद! ललितैर्निर्विशस्तं नगेन्द्रम्॥"[८]

अर्थात् हे जलद्! हेम्नः पद्मानि समुत्पादयतो मानसा-ज्जलं गृह्णन् पर्वतराजं हिमालयं प्रविश। अनेन ज्ञायते यदलकायाः प्रागेव मानससरो विद्यते।

१. रघुवंशमहाकाव्यम्–२।२६
२. ,, –२।२७
३. तत्रैव–४।७१
४. तत्रैव–४।७५
५. कुमारसम्भवम्–१।१०
६. मेघदूतम्–पूर्वार्द्धे–७
७. ,, ,, –११
८. मेघदूतम्–पूर्वार्द्धे–६२

तदनन्तरं यक्षो गन्तव्यामलकापुरीं वर्णयन्नाह, यत् हे पयोद ! प्रियतमस्येव हिमवतोऽङ्के गङ्गादुकूलधारिणीमलकां द्रक्ष्यसि, याऽलका प्रावृषि जलभरितैर्मेघैः सुसज्जितभवनवती सती मुक्ताजालग्रथितैरलकैर्युता काचन कामिनीव भाति । अर्थात् सा नगरी मेघैरेवालकैरलङ्कृताऽलकेति कथ्यते । अत्रेदमपि सिध्यति यद् गङ्गाया उद्गमः कैलास-मानससरोवराभ्यामपि उपरिष्टादस्ति—

"तस्योत्सङ्गे प्रणयिन इव स्रस्तंगङ्गादुकूलां,
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना,
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्[1] ॥" इति

कालिदासेन स्वसर्वस्वेऽभिज्ञानशाकुन्तलेऽपि हिमालयो वर्णितः । सप्तमेऽङ्के स्वर्गात् प्रतिनिवर्त्तमानो राजा दुष्यन्त इन्द्रसारथिना मातलिना प्राशंस्यत—

"सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः पुरुषकेशरिणश्च पुरा नखैः ॥"[2]

अर्थात् हे राजन् ! दुष्यन्त ! यथा पुरा नृसिंहरूपो भगवान् स्वनखाग्रै राक्षसान् निहत्य त्रिदिवं सपत्नविधुरं चकार तथैव भवानपि हिमवतो देवतानिवासस्थानानि दानवकण्टकैर्विरहितानि कृतवान् । अनेन सिध्यति यत्तदानीं हिमवति दुष्यन्तस्यैव शासनमासीत् ।

तत्रैव अग्रे दुष्यन्तो मातलिं किम्पुरुषनिवासस्थानं हेमकूटं पृच्छति । हेमकूटपर्वतो हिमालयस्योत्तरदिग्भागे मन्यते । यथोक्तम्—

"दक्षिणे भारतं वर्षमुत्तरे लवणोदधेः ।
कूलादेव महाभाग तस्य सीमा हिमालयः ॥
ततः किम्पुरुषवर्षं हेमकूटादधः स्थितम् ।
हरिवर्षं ततो ज्ञेयं निषधोऽवधिरुच्यते ॥"[3]

अर्थात् हिमालयादग्रे हेमकूटान्नीचैः किम्पुरुषाणां प्रदेशस्ततो निषधः पर्वतस्ततश्च हरिवर्षमर्थात् योरपदेश आरभ्यते । अनेन स्पष्टं यत् तदानीं न केवलं हिमालयोऽपि तु किम्पुरुषवर्षं हेमकूटपर्वतश्चापि भारतवर्षस्य राज्यक्षेत्रमासीत्; तथापि भारतवर्षस्य निश्चिता उत्तरदिग्वर्तिनी सीमा हिमालयपर्वतपर्यन्तमेवासीत् । अस्तु—

उपरि समुद्धृतैरुद्धरणैर्निश्चीयते यत् महाकविकालिदासो भारतभुवो रक्षक, भगवतस्त्रिनेत्रस्य निवासस्थानं, भवान्या जन्मसदनं च हिमालयं परमं सिन्ह्यति स्म । सम्पूर्णमेव काव्यमस्य हिमवतो वर्णनेनालङ्कृतमस्ति । स्वयं पार्वतीपरमेश्वरावस्याभीष्टदेवते आस्ताम् । अतोऽस्य पर्वतराजस्य वर्णनं कथङ्कारमुपेक्षेतायं महाकविः । हिमालयो नहि केवलं हिमाऽऽलयो न वा पर्वतराजः प्रत्युत भगवत्याः पार्वत्या जनको, भगवतो भूतभावनस्य तपःक्षेत्रं, देवानामाश्रयोऽपि । अतोऽस्य यद् देवतात्मत्व महाकविना प्रतिष्ठापितं तत्सर्वथोपयुज्यते ।

##卐 विद्युल्लता विभाति 卐

**'हंसः'**

अतिशयचपला, सुप्रिया, चित्रा चतुरायाति ।
किं तव दयिता ? नहि सखे, विद्युल्लता विभाति ॥

पूर्वं गर्जति, तर्जयति, पश्चाच्चलति दकास्ति ।
चण्डी पत्नी ? नहि सखे, विद्युल्लता चलास्ति ॥

१—मेघदूतम् पूर्व० ६३ २—अभिज्ञानशाकुन्तलम् ७।३ ३—पद्मपुराणम्

# राजदण्डनिर्णयः—ऐतिहासिकं वृत्तम्

—श्रीमहावीरप्रसादः

आसीत् गोलकुण्डायाः सुल्तानः कृतसङ्कल्पो विजयनगरराज्याधिपतिं कृष्णदेवरायं हन्तुम्। स गुप्तचरमेकं प्राहिणोत् यो विजयनगरे निजशिविरं प्रस्थापितवान्। ज्ञातमिदं तेन यत् तेनालीरामाभिधानस्य राजविदूषकस्य कृष्णदेवराये अमितः प्रभावो वर्त्तते। दिनद्वयानन्तरमेको नवागन्तुको राजविदूषकस्याग्रे समुपस्थितो भूत्वोवाच—'तव परिवारस्य" सदस्योस्मि गृहात् तदा निरगच्छम् यदा आवां वयसि नितरामल्पौ आस्व"। तेनालीरामस्तमागन्तुकं निजगृहें स्थातुमादिदेश किन्तु स्वान्ते तेनोक्तं "यदर्थवान्नरो नैकं सम्बधिनं प्राप्नोति।"

अथैकस्यां रात्रौ यदा विजयनगराधिपतिः शयितुमुद्युक्त आसीत् तदैव रहस्यमयमेकं सन्देशमलभत यदधुना द्विवादनसमये ममावास आगम्यताम् भवद्भिः सह कतिपया आवश्यकीयाः वार्त्ताः विचारणीयाः सन्ति।" पत्रमेतत्विश्वस्तसख्युः तेनालीरामस्य नाम्ना हस्ताक्षरितमासीत्। भूपतिः पत्रं मुहुर्मुहः पपाठ। भृशं विस्मयाभिभूतोऽचिन्तयत् किं नु पत्रं सत्यमेव तस्मादेव वर्त्तते। अथवा केनचित् शत्रुणा जालमेकं रचितं विद्यते! राजा एवं प्रकारेणात्यन्तं शोकाकुलः संजातः। किन्तु सः कतिपयाभिः सावधानताभिः सह रहस्यमयमामन्त्रणमंगीकृत्य गन्तु निर्णीतवान्।

पूर्वं निश्चितवेलायामेकः छायेव नरस्तेनालीरामस्य द्वार्यतिष्ठत्। स एव भूपतिरासीत्। सः स्वैरं कपाटमधक्कयत्। कपाटमुन्मीलितमभूत्। तत्र चिरमतिष्ठत् सः तदनु सोऽभ्यन्तरं प्राविशत्। अन्धस्तमः आसीत्। अकस्मादेकः कृष्णछायेव राजानमाक्रान्तवान्। नीरवाकाशे 'स्विश' इति रवं कुर्वन्नेकः करवालो नरपतिमहन् किन्तु भूपतिवर्मा छादिततनुरासीत्। तदेव पूर्वविधानं तेन गृहीतमासीत्। यदाक्रामकस्य करवालो निष्फलतां गतः राजा तं स्वकरस्थकरवालेनाक्रान्तवान्। वेदनाक्रन्दनेन सह सः गुप्तचरो भूमौ पतित्वा पञ्चत्वं गतः।

अत्रान्तरे तस्मिन् तिमिरे तयोः संघर्षकलकलस्तेनालीरामं प्राबोधयत्। सः दीपकेन सह तत्र धावन्नागतः। तत्रस्थं दृश्यं वीक्ष्य स नितरां स्तब्धो जातः।

अपरेद्युः तेनालीरामः प्रमुक्तन्यायालये स्वयमुर्वीशेण कृष्णदेवरायेण परीक्षितः। विदूषकस्तथाकथितसंबन्धिन आगमनस्यात्मना सह तस्य निवासस्य च सर्वोदन्तं भूपालस्याग्रे अवितथमवर्णयत् आत्मनश्च निरपराधत्वञ्च न्यवेदयत्। राजोवाच, अयि तेनालीराम, तव सदाशयतायामहं न शंके किन्तु विधिनियमानुकूलं मयानुवर्तितव्यमेव। अजानतापि केनचित् शत्रुजनाश्रयदानं राजद्रोहोऽस्ति। अतोऽहमादिशामि यत्त्वं मृत्युदण्डं भजस्व।' राजा मृत्युदण्डादेशं श्रावयन् भूरिभावनिर्भरो जातः यतः तेनालीरामस्तस्यात्यन्तप्रियवयस्य आसीत्।

तदनु किंचित् रूक्षस्वरेण नरपतिरवदत् तेनालीराम! न्यायः निजसरणिं ग्रहीष्यत्येव कारणेनानेनाहं तव दण्डं परिवर्त्तयितुं न पारयामि किन्तु त्वन्मृत्युमार्गचयनाधिकारं तुभ्यमहं प्रददामि। विद्युद्गत्या स लोकविश्रुतः विदूषको व्याहरत्;—"तर्हि महाराज, वार्द्धक्यादहं मर्तुं निश्चिनोमि। नरपतिर्विदूषकस्य मुखं चिर व्यलोकयन्नतिष्ठत्। तदन्तरं सः प्रमुक्तकण्ठं जहास तेनालीरामस्य च मुक्त्यर्थमादिदेश।

# कर्ममीमांसादर्शनम् : क्रियापादः

आविष्कर्त्ता तथा भाष्यकारः

**भगवत्पूज्यपादमहर्षियोगिराजस्वामिज्ञानानन्दमहाराजः**

प्रत्येकं कल्पस्य सर्वोऽपि ज्ञानसमूहः सृष्टेरादौ तत्कल्पप्रकाशितवेदे प्राकट्यमासादयति। अन्यानि वेदसम्मतशास्त्राणि वेदस्यैव भाष्यरूपाणि। अतो वेदाः तत्सम्मताः शास्त्रसमूहाश्च येषां कर्मणामनुष्ठानाय आज्ञां प्रकुर्वते तत्सर्वाण्येव जैमिनिमुनिमते धर्मस्वरूपाणि। अतो जैमिनिमहर्षिमते वेदशास्त्रानुमोदितं कर्मैव धर्मः, वेदशास्त्रनिषिद्धकर्माधर्मः। वेदप्रोक्ताः स्मृतिप्रतिपादिताश्च कर्मकाण्डादयः क्रियाकलापाः सिद्धान्तमिममेवानुसरन्ति। उपासनाप्रवर्तकेषु सर्वेष्वपि तन्त्रशास्त्रेषु साधनशैलीनिर्देशाय यावन्त आचाराः सन्ति तेषु त्रयाणामेवाचाराणां प्राधान्यम्। एतन्मतपरिपोषणायोदाह्रियते यत् तन्त्रेषु प्रचलितो दक्षिणाचार इममेव सिद्धान्तं पोषयति ॥२०४॥

द्वितीयं मतं प्रदर्शयति—

**विधिसाध्यमानमिति नारदः ॥२०५॥**

नारदेन महर्षिणा विधिसाध्यमानं कर्मैव धर्म इति निर्दिष्टम्। धर्माधर्मनिर्णयविषये आचार्यगुरुमहाजना अनुकरणीयाः। धर्माधर्मनिर्णयप्रसङ्गे आचार्याणाम् वेदशास्त्राणामपि मते भेदप्रतीतिः। अत आत्मज्ञो गुरुः शास्त्रज्ञ आचार्यः कुलसम्प्रदायपरम्पराप्राप्ता महाजनाश्च यं मार्गं निर्दिशन्ति स एव धर्मस्य पन्थाः। ये महापुरुषा अविद्यां नाशयितुं विद्यामधिगन्तुं च शिक्षन्ते ते आचार्याः, ये चाभ्युदयनिःश्रेयसप्राप्तये साधनशिक्षां विदधते, ते गुरवः प्रोच्यन्ते। एतादृशा आचार्या गुरवश्च नूनमेव वेदशास्त्रतत्त्वज्ञा आत्मज्ञाश्च भवन्ति। तैः किल यो विधिरुपदिश्यते साधककृते स एव धर्म इति देवर्षिनारदमतम्। भक्ताग्रगण्यो देवर्षिनारदो निजभक्तिदृष्ट्या आचार्ये गुरौ वा ज्ञानसूर्योदयं मन्यते, अतो धर्माधर्मनिर्णये आचार्यगुरुप्रदर्शितं विधिमेव धर्ममङ्गीकरोति। सिद्धान्तमिममनुसृत्यैवानेके वैदिका अवैदिकाश्च सम्प्रदाया उपासनासम्प्रदायाश्च प्रचलिताः प्रचरिष्यन्ति च। अतः साम्प्रदायिकेषूपासकेषु कर्मविधिषु च पार्थक्यं विलोक्यते। तत् तत् सम्प्रदायानां कृते तत्तत्सर्वमुपादेयमेव ॥२०५॥

तृतीयं मतं वक्ति—

**आत्मोन्मुखमिति गौतमः ॥२०६॥**

पूज्यपादमहर्षिगौतममते मानवमात्मोन्मुखं नयत् शारीरिकं वाचनिकं मानसिकं च कर्म धर्म इति। स्वतः सिद्धमिदं यत् मानवान्तःकरणम् इन्द्रियोन्मुखं सत् जीवम् अतिनिम्नावस्थां प्रापयति। अतः कर्मसमूहो जीवं यावदिन्द्रियोन्मुखं नयति तावानेवाधार्मिको भावः समुत्पद्यते। सुतरां यत् कर्म जीवम् आत्मविमुखं विधत्ते तदधर्मः। अन्यत्र धर्मस्योर्द्ध्वगतिः सदा आत्माभिमुखशीला जीवम् अभ्युदयात्मोन्मुखस्रोतसि प्रवाहयन्ती अन्ते निःश्रेयसस्वरूपात्मपदं प्रापयति। अतो महर्षिगौतमस्य धर्माधर्मनिणयविषये मतमिदं विज्ञानानुमोदितम्। ज्ञानाज्ञाननिर्णायकानि तत्त्वज्ञानप्रकाशकानि यावन्ति ज्ञानकाण्डमतानि, तानि सर्वाण्येव अस्यामेव मौलिकभित्तौ स्थितानि। वैदिकानि तान्त्रिकाणि मिश्राणि च उपासनाकाण्डकर्मकाण्डयोः त्रिविधसाधनानि, सकलान्येव तानि यदा तमेव मौलिकं

सिद्धान्तमाश्रयन्ति, तदैव तानि वैदिकानि प्रोच्यन्ते ॥२०६॥

चतुर्थं मतं विविनक्ति —

**अभ्युदयनिःश्रेयसकरमिति कणादः ॥२०७॥**

महर्षिकणादमते अभ्युदयनिःश्रेयसकरं कर्मैव धर्मः। मानवधर्मधारिकायाः शक्तेः प्रभावतो मनुष्यः प्रथमम् ऐहलौकिकमभ्युदयं समीहमानस्तं प्राप्नोति ततः किञ्चिदुन्नतावस्थां प्राप्तः पारलौकिकमभ्युदयमिच्छन् तमधिगच्छति। अन्ते च सत्त्व गुणमभिवर्द्धयन् निःश्रेयसमीहमानः तमासादयति। अतः येन कर्मणा ऐहलौकिकपारलौकिकाभ्युदयः प्राप्यते, अन्ते च निःश्रेयसावाप्तिः, तत् सर्वमेव शारीरिकं बौद्धिकं च कर्म धर्मशब्दवाच्यमिति महर्षिकणादमतम्। आर्यजातीयवर्णाश्रमशृङ्खलामौलिकभित्तिः सिद्धान्तमिम निर्बिभर्त्ति ॥२०७॥

पञ्चममतं निर्दिशति—

**अक्लिष्टपोषकमिति पतञ्जलिः ॥२०८॥**

अक्लिष्टपोषकं कर्मैव धर्म इति महर्षिपतञ्जलिसम्मतम्। वृत्तिराज्याधारभूतमनो बन्धनमोक्षकारणम्। अन्तःकरण एव कर्मसंस्कारोऽपि संचीयते, मनोवृत्तिमयम्। पूज्यपादमहर्षिपतञ्जलिना वृत्तिराज्यं क्लिष्टाक्लिष्टभेदेन द्विधा विभक्तम्। सर्वा अपि मनोवृत्तयः क्लिष्टाक्लिष्टान्तर्गताः। क्लिष्टा वृत्तयस्तमोवर्धयन्ति, अक्लिष्टाश्च सत्त्वम्। अतो महर्षिपतञ्जलिमते यानि शारीरिकमानसिकबौद्धिककर्माणि मनसः क्लिष्टवृत्तीः परिवर्धयन्ति तान्यधर्मरूपाणि, यानि चाक्लिष्टवृत्तिसमेधकानि तानि धर्मशब्दवाच्यानि। मन्त्रयोगहठयोगलययोगराजयोगनाम्ना चतुर्विधयोगसिद्धान्तमवलम्ब्य यावन्तः सम्प्रदाया आविर्भूतास्तदाधारमिदं मतमेव परिपोषयन्ति। उदाहरणत इदं वक्तुं शक्यते यत् तन्त्रोक्तदिव्याचारसाधनविधयो मौलिकीमिमामेव भित्तिमास्थिताः ॥२०८॥

षष्ठं मतं निरूपयति—

**लीलामोचकमिति कपिलः ।२०९॥**

प्रकृतिलीलातो मोचकं कर्म धर्म इति महर्षिकपिलमतम्। लीलामय्या ब्रह्मप्रकृतेर्महामायाया लीलैव दृश्यप्रपञ्चरूपसृष्टेर्मौलिक कारणम्। त्रिगुणमय्याः प्रकृतेस्त्रिगुणजाले बद्धो जीव आवागमनचक्रे निरन्तरं भ्राम्यति। अतः प्रकृतिलीलाविलासः स्थितिशीलः। अतोहि येन शारीरिकेण, मानसिकेन, बौद्धिकेन च कर्मणा त्रिगुणजनितलीलाबन्धनं वर्धते तत् अधर्मस्वरूपम्, येन च जीवनबन्धनकारिणो लीलाग्रन्थेः विमोकस्तद् धर्मशब्दवाच्यम्। तात्पर्यमिदं यत् प्राकृतिकीलीला पुरुषस्वच्छस्वरूपे प्रतिफलिता पुरुषं विमोहयति। तत्त्वज्ञानेन साधको यावत् प्रकृतिस्वरूपं विजानाति तावदेवासौ प्रकृतिलीलाबन्धनं परित्यजति। येन येन कर्मणा प्राकृतिको लीलानुरागो ह्रसति तदेव धर्म इति पूज्यपादमहर्षिकपिलमतम्। यावन्ति वैदिकमतानुयायीनि कर्मकाण्डानि यावन्तश्च दार्शनिकसम्प्रदायाचाराः प्रचलन्ति तेषां सर्वेषामेव मौलिकभित्तिरिदमेव विज्ञानम् ॥२०९॥

सप्तमं मतं प्रदर्शयति—

**सत्त्ववृद्धिकरमिति भरद्वाजः ॥२१०॥**

धर्माधर्मनिर्णयविषये महर्षि-सूत्रकारभरद्वाजमतमिदं यद् येन शारीरिकेण, बौद्धिकेन च कर्मणा तमोगुणहानिः सत्त्वगुणवृद्धिश्च जायते तत् कर्म धर्मशब्दवाच्यम्। अत्रैव सिद्धान्ते मीमांसाशास्त्रं प्रतिष्ठितम्। सनातनधर्मस्य सर्वव्यापक-सर्वजीवहितकरधर्मविज्ञानस्य मौलिकी भित्तिरियमेव ॥२१०॥

अष्टमं मतं निरूप्यते —

**ईश्वरार्पितमित्यङ्गिराः ॥२११॥**

ईश्वरार्पितं कर्म धर्म इति महर्षेः अङ्गिरसो मतम्। सर्वविधमपि कर्म ईश्वरार्पणपूर्वकं क्रियमाणं धर्मशक्तिमुत्पादयति। यथा किल आत्मना प्रकृतिसम्बन्धः तथैव प्रकृत्या कर्मसम्बन्धः। आत्मना पृथग्भवन्ती प्रकृतिः सृष्टिलीलाविलासं प्रकटयति। आत्मनः पृथग्भूत्वा प्रकृतितरङ्गायितदशेव कर्मोत्पत्तिकारणम्। तेनैव च जीवभावः समुत्पद्यत इति दर्शनशास्त्राणि साधुरीत्या प्रमाणयन्ति। तदेव च अनन्तकोटिब्रह्माण्डभाण्डोदर्य्याः ब्रह्मप्रकृतेः सृष्टिलीलाविलासस्य गूढं रहस्यम्। लयक्रिया तद्विपरीता। कर्म यदा प्रकृतौ प्रविशति, प्रकृतिश्च ब्रह्मण्यव्यक्तदशामधिगच्छति, तदानीं सहैव कमणा दृश्यप्रपञ्चमयं जगदिदं परमात्मनि विलीयते। बन्धमोक्षयोरेकमात्रकारणभूतं जीवान्तःकरणं यदा बहिर्मुखीनतां सम्पद्यते, तदा सैवावस्था बन्धनकारिणी। आत्मोन्मुखीनमन्तःकरणं जीवविमुक्तिनिदानम्। इममेव दार्शनिकं सिद्धान्तमभिलक्ष्य महर्षिरङ्गिराः सिद्धान्तितवान् यत् भगवद्भक्तिसंयुक्तः साधको यद्यत् शरीरमनोबुद्धिकार्यमनुतिष्ठन् धैर्यसद्विचारानुगुण्यं सत्येन हृदा यत्कर्म परमात्मनि समर्पयति तत्सर्वमपि धर्मशब्दवाच्यमित्यत्र नास्ति सन्देहावसरः। शङ्कासमाधानपुरस्सरमिदमुच्यते यद् यदि आत्मोन्मुखीनमन्तःकरणमेवाभ्युदयनिःश्रेयसाधिगमस्यैकमात्रनिदानम्, यदि च सर्वासां परिसमाप्तीनां निखिलस्याप्याश्रयस्थलमात्मैव, यदि चापि आत्मनि लक्ष्यभूते सति जीवस्य समस्तमपि कालुष्यं शुभाशुभकर्मणा साकं स्वत एव विनाशमुपढौकते, तर्हीदं स्वतः सिध्यति यदात्मानमभिलक्ष्य यत् किमपि क्रियमाणं सदसत्कर्म जीवाभ्युदयनिःश्रेयसकरं धर्मतामापत्स्यते। अद्यन्त्वेदमपि सुनिश्चितमेव यदन्तःकरणस्य विक्षेपराहित्यं विना भक्त्या च भगवद्भावापन्नत्वमन्तरेण न भवितुमर्हति मनसोगतिरात्माभिमुखीना। यदि च भक्तमनोवृत्तावात्मोन्मुखिन्यां जातायां सत्यामन्तःकरणे धर्मपुण्योदयः स्वभावसिद्धः। विषयोऽयं प्रकारान्तरेणाप्यवमन्तुं शक्यते, तथाहि—भाव एवान्तःकरणस्यान्तिमं तत्त्वम्। अतः सदसद्भाव एव सदसत्कर्महेतुतां भजते। उदाह्रियतेऽत्र यदसत्कर्मापि जीवहिंसा यज्ञपशुबलिस्वरूपा धर्मतामापद्यते। प्रसङ्गेऽत्रमतविशेषं निदर्शयति तन्त्रशास्त्रोक्ताः कर्मोपासनाकाण्डयोः प्रवर्त्तकाः, सर्वेऽप्याचारा दक्षिणाचारदिव्याचारभेदेन त्रिधा विभक्तुं शक्यन्ते। तेषु वामाचारपद्धतिरिमामेव वैज्ञानिकीं भित्तिमास्थिता। अतो भावशुद्धिपूर्वकं क्रियमाणं कर्मैव धर्मः। ईश्वरस्मरणपुरस्सरं परमेश्वरसमर्पितेन कर्मणा स्वत एव भावशुद्धिः। अतो हेतोः पूज्यपादमहर्षिरङ्गिरा इदं निश्चिनोति यत् किमपि शारीरिकं मानसिकं वा कर्म भगवत्प्रीत्यर्थं विधीयमानं श्रीमति परमात्मनि समर्पितमवश्यमेव धर्मस्वरूपतामापद्यते ॥२११॥

नवमं मतमुदीर्य्यते—

**लोकहितमिति व्यासः ॥२१२॥**

लोकहितकरं कर्मैव धर्म इति महर्षिव्यासमतम्! व्यष्टिसमष्टिरूपेण ब्रह्मांण्ड पिण्डं च समानम् व्यष्टिसमष्टिसम्बन्धेन जगद्धितकर व्यक्तिहिताधायकं कर्म चैकमेव। जगता सह जगत्कर्त्तु भगवत एकत्वसम्बन्धः। पिपीलिकातो हस्तिनं यावत्, मानवादारभ्य मनुष्यसमाजपर्यन्तं सर्वा एव समष्टयो व्यष्टयश्च भगवता सहसंबंधनिबन्धना विज्ञेयाः। पशुं खगमारभ्यसाधारण मानवीयसृष्टिपर्यन्तम्, असभ्ये मानवे ज्ञानिनि वा भगवतश्चित्कलातारतम्ये सत्यपि जगदीश्वरसृष्टिरेकसम्बन्धसमलिता वेद्या। अतोहि लोकसमर्चया जगदीश्वरपजा क्रियते। वसुधैव कुटुम्बकम्, जगच्चपरमात्मस्व-

रूपमिति बुद्धया क्रियमाणं फलगु गुरु वा शारीरिकं मानसिकं बौद्धिकं च कर्म धर्मशब्दवाच्यमेव। पूज्यपादेन महर्षिणा व्यासेन समाम्नायते यत् शारीरिकं वाचनिकं बौद्धिकं च कर्म लोकहितदृष्टया, जगत्कल्याणधिया क्रियेत तर्हि तत् धर्म एव। जगत्सेवा भगवत्सेवातो नातिरिच्यते, तदा जगत्सेवा धर्मकार्यमित्यत्र कः सन्देहः। अतो भगवता व्यासेन प्रोक्तम्—

**अयं निजः परोवेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥**

एतदर्थं धर्मविषये व्यापकमेकं साधारणलक्ष्यं व्यञ्जयितुमेतादृशमतप्रकाशः स्वाभाविक एव। यद्यपि धर्मस्य व्यासक-विशेषसाधारणलक्षण-विषये सविस्तरमीमांसा प्रथमपादे समनुष्ठिता; तथापि तत्तन्महर्षिविभिन्नमतेषु कीदृक् कर्म धर्मः किञ्चाधर्म इति विषय एतेषु सूत्रेषु विवेचितः॥२१२॥

मतपार्थक्यनिदानमुच्यते—

**संस्काराधिकारभेदोऽत्र हेतुः॥२१३॥**

संस्कारोऽधिकारभेदश्च धर्मविषये महर्षिमतभेदकारणम्। पूज्यपाद-महर्षिमतेषु पूर्वोक्तां विभिन्नतामवलोक्य सन्देहग्रस्तस्य जिज्ञासाः शङ्कायाः समाहितये विज्ञाप्यत इदं यत् धर्मविषये महर्षिषु वस्तुतो न मतभेदः, किन्तु संस्काराधिकारवैचित्र्यमेवात्र हेतुः। स्वीयपूर्वजन्मार्जित-विभिन्नसंस्कारकारणेन प्रारब्धजनिताधिकारवैचित्र्यहेतुना च मानवानां प्रकृति-प्रवृत्ति-शक्तिभेदः स्वाभाविकः। भेदेनैतेन साधनपद्धतौ विभिन्नमार्गेषु च रुचिपार्थक्यं स्वभावसिद्धम्। एतेनैव कारणेन जगत्कल्याणबुद्धया कृपालवो धर्माचार्या महर्षयो धर्मविषये विविधमार्गान् निर्दिष्टवन्तः। यस्य यः पन्थाः सुगमस्तेन तेनैव पथाऽग्रेसरिष्यते। सर्वे किलाभ्युदयस्य निःश्रेयसस्य वा पथः पथिकाः सम्भवन्ति॥२१३॥

कारणान्तरं व्याचष्टे—

**सर्वजीवहितकरत्वं च धर्मस्य॥२१४॥**

धर्मस्य सर्वजीवहितसाधकत्वं च महर्षिमतभेदकारणम्। धर्मस्य विराट्स्वरूपं तदीया व्यापकसत्ता च ब्रह्माण्डे पिण्डे, जडे चेतने च समानभावेन स्थित्वा सृष्टिरक्षां विधत्ते। परन्तु मानवशरीरे विलक्षणं तदाधिपत्यम्। मानवो यदा पञ्चकोषपरिपूर्णतां प्राप्य स्वस्य पिण्डस्याधीश्वरो जायते तदा धर्मशक्तेरनुगमनमावश्यकम्

चेतने जगति धर्मनियामिकायाः शक्तेः पूर्णता दृष्टिगोचरतामापद्यते। व्यष्टिसृष्टिक्रममनुसृत्य जीवभावविकास उद्भिज्जतः प्रारभते। तदानीं जीवः क्रमशः स्वेदजाण्डज-जरायुजान्तर्गतागणितयोनिषु भ्राम्यन् मानवयोनिं प्रपद्यते। उद्भिज्ज-स्वेदजाण्डज-जरायुज-मनुष्येषु क्रमशोऽन्नमय-प्राणमय-मनोमय-विज्ञानमयाऽऽनन्दमयाः कोषा विकसन्ति। उद्भिज्जे चैकः, स्वेदजे द्वौ, अण्डजे त्रयः, जरायुजे चत्वारः, मानवे च पञ्चकोषा विकाशमापद्यन्ते, पञ्चकोषविकासतो जीवभावस्य पूर्णता। निम्नयोनिषु कोषाश्चान्ये गौणरूपेण तिष्ठन्ति। धर्मस्यैव शक्तिरियं यया जीवः प्रकृतिराज्ये क्रमोन्नतो भवन् मनुष्ययोनिमासादयति। जीवक्रमोन्नतिमभिलक्ष्य भगवता वेदव्यासेन प्रोक्तं यत्—

**उन्नतिं निखिला जीवा,**
**धर्मेणैव क्रमादिह।**
**विदधानाः सावधानाः**
**लभन्तेऽन्ते परं पदम्।**

प्रकृत्यधीनत्वादेव जड़राज्यस्य समस्तेषु जीवेषु प्रकृतिसाहाय्येनैव स्वभावत एव धर्मविकासः सम्पद्यते। केवलं चेतनराज्यजीवे मनुष्य एवं कर्मानुष्ठानस्वातन्त्र्यं [illegible] समुदेति, येन तत्र पूर्णरूपतः स्वाधीनो धर्म-

विकाशो जायते। अतो मानव एक धर्मसाधनाधिकारी। उक्तं च महाभारते भगवता व्यासेन--

मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥
उपभोगैरपि त्यक्तं नाऽऽत्मानं सादयेन्नरः।
चाण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥

उद्भिज्जतः पशुपर्यन्तं जडराज्यस्य सर्वे जीवाः कोषविकासानुसारेण प्राकृतिकरूपेण धर्मविकासमासादयन्ति। एकमात्रमन्नमयकोषविकासहेतुनैवोद्भिज्जो जीवः शाखामात्रविरोपणेनैव वृक्षरूपेण परिणमते, एवं किलोद्भिज्जशक्तिर्हि किञ्चिद्धर्मविकाससूचिका। स्वेदजे प्राणमयकोषविकासत्वात् अनेकाः प्राणक्रियाः परिदृश्यन्ते, तथाहि— रोगकीटाणुभिः शरीरे व्याध्युत्पत्तिः, महामारीप्रसृतिः, रुधिरश्वेतकीटाणुद्वारा व्याधिनाशः, सर्वमिदं स्वेदजयोनौ धर्मविकासपरिचायकम्। अण्डजे मनोमयकोषविकासलक्षणप्रेमद्वेषादिवृत्तिदर्शनं धर्मशक्तिविकासफलस्वरूपमेव। जरायुजे विज्ञानमयकोषविकासत्वात् पशुशरीरेषु धर्मविकासस्य बहुविधानि बुद्धिवृत्ति-लक्षणानि प्रत्यक्षसिद्धानि, गजव्याघ्राश्वसिंहादयः समुन्नताः पशवः स्वाधिकारानुरूपं बुद्धिकार्य कुर्वन्तः परिदृश्यन्ते। सर्वमिदमेतेषु धर्मविकासस्य प्रत्यक्षलक्षणम्। एवं हि प्रकृत्यैव धर्मविकासं प्राप्नुवन्तो जीवा अन्ते मनुष्ययोनिमासादयन्ति।

जडराज्यजीवान् प्रकृतेः पूर्णरूपेणाधीनतां भजतस्तान् प्रकृतिमाता शिशुवत् स्वक्रोडे लालनं पालनं कुर्वती मानवयोनि प्रापयति। अतः प्रकृतेरेव पूर्णप्रतिभाग्यत्वात्तथाभूतो जीवो न भवितुमर्हति पुण्यपापाधिकारी। परन्तु मानवशरीरं प्राप्तो जीवोऽहम्भाववृद्ध्या स्वतन्त्रो भूत्वा कर्मानुतिष्ठन् प्रकृतेरनुशासनमुल्लङ्घयन् यथेच्छमिन्द्रियसेवापरायणो बोभूयते। जडराज्ये वर्त्तमानजीवस्य नियमितरूपतोऽह्याहारनिद्राभयमैथुनादिक्रियाकलापाः सम्पद्यन्ते स्म, ते प्रकृताधिपत्यकारणात् मानवजीवस्यानियमिततां भजन्ते। एतत्फलमिदं यत् उद्भिज्जयोनितो मानवयोनिपर्य्यन्तमवाधमुपढौकमाना जीवक्रमोन्नतिधारा रुद्धा सती पुनर्निम्नगामितां प्रपद्यते। धर्मशक्त्यैव मानवस्याधोमुखिना गतिर्निरुद्धोर्द्ध्वमुखीना सम्पद्यते। अत एव सनातनो धर्मो जागतिकसर्वधर्ममतानां पितृस्वरूपः। स च स्वाभाविकोऽतः प्रकृतिसहजातः। धर्म एव मानवं वर्णाश्रमधर्मविधिना क्रमशः समुन्नयन् अवसाने मुक्तिपदं प्रापयति। अतः प्रकृतिप्रवाहानुकूलगत्या क्रमशः समुन्नतिरन्ते च मुक्तेरधिगमोधर्मः, प्रकृतिप्रतिकूलगत्याऽवनतिलाभ एवाधर्मः। अतः कारणात् धर्मस्य धारिकाशक्तिः सहजपिण्डजीवेषु स्वाभाविकसंस्कारानुत्पादयन्ती प्रकृतिस्वभाववशवर्त्तिजीववर्गमुद्भिज्जादियोनिषु क्रमशः समुन्नयन्ती अभ्युदयं निष्कण्टकीकुरुते। अनन्तरं च मानवशरीरमासादयतो जीवान् असभ्यकिरातानार्यभावतः सभ्यायामार्यजातौ प्रापयन्ती क्रमशोऽभ्युदयमार्गेऽग्रेसरान् विधत्ते। अन्ते च सैव धर्मस्यजगन्नियामिका शक्तिर्मनुष्येभ्यस्तत्त्वज्ञानप्रदानपूर्वकं निःश्रेयसमार्गं निदर्शयति। ततश्च मानवमात्मज्ञानाधिकारिणं सम्पाद्योच्चतमज्ञानभूमिमधिगमयति, सैव धर्मशक्तेः सर्वजीवहितकारकोऽसीममहिमा। मनुष्यधर्मस्य द्विसप्ततिसंख्याकेष्वङ्गेषु तदीयेषु बहूपपाङ्गेषु कानिचिदङ्गोपाङ्गान्याश्रित्यानेकेऽवैदिका धर्ममतसम्प्रदायाः पृथिव्यामुत्पन्ना उत्पद्यन्ते समुत्पत्स्यन्ते च, स्वस्वाधिकारमनुसृत्य तत्तदधिकारिजीवानभ्युदयमार्गमप्रापयन् प्रापयिष्यन्ति च, इदमेव सनातनधर्मस्य सर्वजीवहितकरं स्वरूपम्। धर्मस्याधिकारभेदत्वादेव सर्वजीवहितावहायकत्वम्, नान्यथेति ॥ २१४ ॥

प्रसङ्गतः सर्वतो गरीयो महत्त्वं प्रोच्यते—

**स हि सर्वधारकः ॥ २१५ ॥**

स च धर्मः सर्वस्य धारको धारणशील इति यावद् वेदनीयः। सर्वस्य सम्पूर्णपदार्था जड्चेतनभेदतो भागद्वयेन

विभक्तं शक्यन्ते। अतो येयमीश्वरीयशक्ति र्द्विविधमपि पदार्थं धारयति, सैव धर्मः। "योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्म" इति पातञ्जलयोगभाष्ये भगवता व्यासेन स्वयमुदीरितम्। यस्याः शक्तेरभावात् जडस्य चेतनस्य वा पदार्थस्य सत्तैव न स्यात् सा शक्तिरेव धर्मः। जडपदार्थेषु पावकस्योष्णत्वम्, जलस्य द्रवत्वम् चुम्बकस्य लौहाकर्षणत्वम् इत्यादि। इदमुदाहरणं चेतनेषु चापिबोध्यम् यथा मानवस्य मानवत्वम्, अर्थात् यस्याः शक्तेर्विद्यमानत्वात् मानवो मानवपदं बिभर्त्ति, सैव शक्तिर्मनुष्ये धर्मऽप्रोच्यते, तथैव ब्राह्मणे ब्राह्मणत्वम्, शुद्रे शूद्रत्वम् पशौ पशुत्वमादि। विज्ञानेनैतेन सुतरां सिद्ध्यति यद् धर्मस्यालौकिकशक्तिद्वारा हि विश्वानि जगन्ति ब्रह्माण्डानि सुरक्षितानि।

प्रकृतिविशालराज्ये धर्मस्य लीलामनुशीलयन् सहृदयो मनुष्यों नितरां चकितो जायते; विराटपुरुषशरीरे कियन्ति ब्रह्माण्डानि सुशोभन्ते, यत् तेषां संख्यानमसम्भवमेव। यथा-चोक्तं महानारायाणोपनिषदि—

**"अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येता-दृश्यान्यनन्तकोटिब्रह्माण्डानि ज्वलन्ति" इति,**

धर्मस्य धारणशक्त्यैव प्रत्येकब्रह्माण्डस्थितशशिसूर्यादि-ग्रहोपग्रहनक्षत्रधूमकेतुप्रभृतयो जीवाश्रयभूताः स्वकीयाकर्षण-समन्वयेन स्वां स्वां कक्षां भ्राम्यन्तो नैव पदच्युताः सम्पद्यन्ते विशालस्य ग्रहस्याधिकेनाकर्षणेन लधुग्रहो न तदीयगर्भप्रविष्टो नाशमुपयाति। सर्वमिदं धर्मस्य विश्वधारणशक्तेः परिणाम-भूतमवगन्तव्यम्। पाश्चात्यविज्ञानेनापीदं सिद्धयति यत् प्रत्येकस्मिन्नपि परमाणावाकर्षणविकर्षशक्तो तिष्ठतः, सर्गकाले आकर्षशक्तिवलेन परमाणवः परस्परं सम्पृक्ताः स्थूलानि जगन्त्युत्पादयन्ति, प्रलयसमये च विकर्षणशक्तिप्राबल्येन परमा-णवोऽन्योन्यं पृथग्भवन्तो स्थूलानां जगतां विलयं विदधते, स्थितिदशायां किल आकर्षणविकर्षणयोः सामञ्जस्यमवधेयम्; सामञ्जस्यसंरक्षणमिदं धर्मस्य धारकशक्तिकार्यम्, येन स्थिति-काले नानावैचित्र्यपरिपूर्णस्यैतस्य संसारस्य मधुरमधुरा लीला दृष्टिगोचरीक्रियते।

धर्मस्य विज्ञानं पूर्णरूपेणावगन्तुं तस्य धारिकायाः शक्तेरनुसारेण ब्रह्माण्डे, पिण्डे; जडे, चेतने मनुष्यादौ धर्मशक्तेः स्वरूपपार्थक्यमवगन्तुमुचितम्। यथा किल स्थूलपदार्थेष्वा-कर्षणेन मेलनं विकर्षणेन च पार्थक्यम्, तथैवान्तर्जगन्नामके मनोराज्येऽपि राद्वेषशक्ती व्यवस्थिते। रागशक्त्या मानव-स्यैकस्य चित्तं मानवोऽपर आकर्षति, येन श्रद्धा-प्रेम-स्नेहादयो वृत्तयः समुत्पद्यन्तेऽन्योन्यं हृदयमाकर्षन्ति च। रागजेनाकर्ष-णेनैव पितृपुत्रपतिपत्नीप्रभृतीनामात्मीयस्वजनमोहतो जगदिदं सुदृढबन्धनयुक्तं निभाल्यते, एतद्विपरीतशक्तिर्द्वेष इत्युच्यते। एतेनैव शत्रून् प्रत्यन्तःकरणे द्वेषवृत्तिरुदेति। द्वेषस्योदयेनैव रिपुष्वमङ्गलेच्छाप्रादुर्भावः पूज्यचरणैस्त्रिकालदर्शिभिः स्वीय-सर्वतोमुखिनाभिः प्रतिभाभिः सर्वप्रत्यक्षमिदं संसाधितं यत् जडराज्ये आकर्षणविकर्षणशक्तिवत् चैतन्ये राज्येऽपि रागद्वे-षशक्ती विद्यते। रागशक्ती राजसी द्वेषशक्तिस्तामसी च, तथैवाकर्षणशक्तिः रजोगुणमयी विकर्षणशक्तिश्च तमोमयी। अन्यच्चाकर्षणविकर्षणशक्त्याः समन्वयेन सत्त्वगुणमय्या शक्तेरुदयो जायते; तथैवान्तर्जगत्यपि रागद्वेषसमन्वयेन ज्ञानविकासः, तेन चान्तःकरणं सत्त्वगुणमयं बोभवीति। एतेनेदमवगन्तव्यं यदेकत्र ब्रह्माण्डे यावच्चचन्द्रसूर्यादिग्रहोप-ग्रहादिषु आकर्षणविकर्षणशक्तिसमन्वयो विद्यते तावदेव ब्रह्माण्डं स्वस्वरूपेतिष्ठति, ग्रहोपग्रहाश्च परस्परमाकृष्टा नैव विनाशमुपयान्ति। ब्रह्मशक्तेर्महामायाया इयं किल जगन्नि-यामिका ब्रह्माण्डधारिका धर्मशक्तिरेव यया प्रत्येकं ब्रह्माण्डं स्वे स्वे रूपे धार्यते, अनन्तकोटिब्रह्माण्डानि च स्वस्वस्थानेषु परिरक्ष्यन्ते। एतदेव ब्रह्माण्डेषु धर्मशक्तेरुदयस्य दिग्दर्शन-मवधेयम्।

ब्रह्माण्डधर्मशक्त्यनुग्रहस्वरूपे प्रत्येकपिण्डेऽपि धर्मस्य सर्वव्यापिन्याः स्थितिकारिण्याः शक्तेरनुभूतिस्तु

प्रत्यक्षैव । प्रत्येकं पिण्डस्य या तदीयोर्द्ध्वमुखीना चित्सत्ता, तस्या अभिवृद्धिर्यया क्रियया सम्पाद्यते 'सैव पिण्ड-धर्मः । सहज-देवमानवभेदेन पिण्डमपि त्रिविधम् । उद्भिज्ज-स्वेदजाण्डजजरायुजाश्चतुर्विधा योनयो यानि पिण्डान्याश्रन्त्यो मृत्युलोके सन्तिष्ठन्ते तानि सहजानीत्युच्यते । औषधि-वृक्षादय उद्भिज्जाः जलरक्तपृथिव्यादिषु निवसन्तः कीटाणवः स्वेदजाः, सर्पकपोतमयूरादयोऽण्डजाः, मृगगजप्रभृतयो जरायु-जाश्च प्रकृतेः सहजकर्मसञ्चालितत्वात्सहजपिण्डनाम्ना समा-म्नाताः । देवाः, असुराः ऋषयः, पितरः प्रेतादयश्च यानि शरीराणि धारयन्ति, तानि देवपिण्डसंज्ञया प्रोक्तानि, मृत्यु-लोके मनुष्यशरीरं मानवपिण्डमाख्यायते । ब्रह्माण्डधारिकाऽनन्तस्वरूपा धर्मशक्तिरेव सर्वपिण्डेषु व्याप्नुवन्ती पिण्डधर्मं संरक्षति । वहिःस्वरूपेण, आभ्यन्तररूपेण चेति प्रकारद्वयेन पिण्डधर्मः परिरक्ष्यते । यतः प्रत्येकस्मिन् पिण्डे शरीरशरी-रिणोर्विद्यमानता । प्रत्येकपिण्डे तद्विशेषपिण्डधर्मरक्षा शरीर-धर्मतः सम्बद्धा । तत्र च प्रत्येकपिण्डस्थजीवस्य प्रथमदशाया-मभ्युदयस्यावाप्तिः, द्वितीयावस्थायां च निःश्रयसाधिगमस्तदीयपिण्डस्थितजीवात्मनः क्रमाभिव्यक्तिसम्बन्धनिबन्धनः, धर्मस्य जगद्धारिका शक्तिः पिण्डस्य समस्तक्रियासम्पादने साहाय्यमाचरति, अन्तःकरणे च क्रमशः सत्त्वगुणं विकासयन्ती जीवमभ्युदयनिःश्रेयसपथपथिकं विधत्ते ।

इदानीं जडजगति धर्मशक्तिः कथं कार्यकारिणीत्युच्यते, प्रस्तरकाष्ठादिखण्डानामुदाहरणमावधेयम् । काष्ठसृष्टिकाले तत्परमाणव आकृष्यन्ते, इयमेव रजोगुणदशा काष्ठस्य बोध्या समयान्तरे यदा काष्ठानि घुणैः संयुक्तानि विशीर्णानि मृत्तिकारूपेणपरिमन्ति, तदा सैव तमोगुणावस्था ज्ञेया, तथैवाऽश्मानः पृथ्वीव्यापिन्यास्तडिच्छक्तेः प्रभावतो मृत्तिकाभिः प्रस्तराकारेण परिणमन्ति, तर्हिसैव तदीया रजोगुणावस्था, यदा च जलाग्निवायुप्रभावद्वारा प्रस्तरपरमाणवः पार्थक्यं भजन्ते, सैव तस्य तमोगुणदशा । किन्तु रजस्तमसोः समन्वयेन काष्ठं प्रस्तरं च स्वरूपे तिष्ठति सैव तदीयसत्त्वगुणावस्था विज्ञेया । अस्यामवस्थायामेव धर्मस्य धारिकाशक्तिर्जडपदार्थेषु विद्यमाना विलोक्यते ।

धर्मशक्तिरेव जीवान्तःकरणेषु क्रमशः सत्त्वगुणमभिवर्धयन्ती जीवमुद्भिज्जस्वेदजाण्डज जरायुजेषु क्रमेण समुन्नयन्ती मानवयोनिं प्रापयति ततश्चानार्य-शूद्र-वैश्य-क्षत्रिय-ब्राह्मण-शरीरेषु प्रापय्य जीवं तत्त्वज्ञानिनमात्मज्ञानिनं सम्पाद्य बन्धनान्मोचयति । चेतनराज्ये धर्मशक्तेरयमेव प्रकृष्टो दृष्टान्तः । जडचेतनराज्येषु, स्थावरजङ्गमपशुमनुष्यादिषु, मानवदेवपिण्डप्रभृतिषु च आपरमाणो ब्रह्माण्डपर्यन्तं सर्वत्रैव सर्वव्यापकः सर्वाश्रयस्वरूपो धर्म एव सर्वसरक्षणशीलइत्येव तस्य सर्वोत्कृष्टं महत्त्वमवगन्तव्यम् ॥२१५॥

अन्यदपि --

**मलाविकारविक्षेपावरणास्मितापहन्तृत्वात् सर्वशुद्धिप्रदश्च ॥२१६॥**

स च धर्मो मलादीनां नाशकत्वात् सर्वशुद्धिकरश्चेत्यर्थः पञ्चानामपि अन्न-प्राण-मनोविज्ञानान्दमयानां कोषाणां तमो-वर्द्धिन्यः पञ्चमलिनाः शक्तयो भवन्तीति पूर्वमेव प्रोक्तम् । अन्नमयस्य कोषस्य मलिनप्रभावो मलः, प्राणमयस्य विकारः मनोमयस्य विक्षेपः, विज्ञानमस्य आवरणम्, आनन्दम-यस्य चाऽस्मितेति । इत्यप्युदीरितं प्राक्यत् कुत्र कोषे कथङ्कारं मलिनक्रिया समुत्पद्यते । पञ्चकोषावृतो ह्यात्मा पञ्चकोषीय मालिन्याभिवृद्धयाऽऽच्छन्नप्रकाशो जायते, पञ्चकोषमालिन्यह्रासेन चात्मनो मलिनताऽपि क्रमशो ह्रासमुपयाति । एतदपि प्रतिपादित पूर्वयत् शुद्धाशुद्ध-विवेकानुसारमाचारपरिपालनेन पञ्चापि मलिनता नैव प्रवर्धन्ते प्रत्युत स्वयं ह्रसन्त्येव । धर्मस्य प्रबलसर्वतोमुखीन-शक्तिद्वारा मलविक्षेपादयः पञ्चदोषाः स्वत एव नश्यन्ति, त्रिविधशुद्धयासम्पद्यमानया चान्ते निःश्रेयसमधिगम्यते । एतदपि प्रागेव निर्णीतं यत् विश्वधारको धर्मः सत्त्वगुणस्य पोषको वर्धकश्च, सुतरां सत्त्वगुणमयः स्वच्छतासम्पादको धर्मः किल सर्वशुद्धिप्रद इत्यत्र कः सन्देहः ॥२१६॥

इदानीं प्रकृतविषयमभिधत्ते--

**त्रिविधा सप्तविधा च क्रियापरिणतिः ॥ २१७ ॥**

क्रियायाः परिणामस्त्रिविधः सप्तविधश्च, यथा किल देशकालानुसारं कर्मणो वैचित्र्यमुत्पद्यते, तथैव प्राकृतकेन त्रिविधेन, सप्तविधेन च विभागेन कर्मणो विचित्रता विज्ञेया सत्त्वरजस्तमोरूपेण त्रिगुणेन, अध्यात्माधिदैवाधिभूतस्वरूपेण भावत्रयेण, वातपित्तकफात्मकेन दोषत्रयेण त्रिविधो विभागः स्वतः सिद्धः, तथैव सप्तधातुसप्तदिन-सप्तज्ञानभूमिप्रभृतयः स्वाभाविकाः सप्तविभागाः सन्त्येव, एतान् प्राकृतिकविभागाननुसृत्य क्रियायामवश्यमेव वैचित्र्यपूर्णप्रभावनिपातः देशकालपार्थक्येन, त्रिविधाधिकारस्य सप्तविधाधिकारस्य च पार्थक्यद्वारा धर्माधिकारविचित्रता विज्ञानसम्मता ॥२१७॥

विज्ञानमिदं पुनः परिपोषयति---

**युक्तक्रियायाः ॥ ८१८ ॥**

पूर्वोक्ता भेदाः युक्तक्रियायाः बोध्याः । युक्तिक्रियाया; स्थायित्वसम्पादनाय देशकालयोः, त्रिविधानां सप्तविधानां सप्तविधानाञ्चाधिकाराणां विमर्शों नूनमेवानुष्ठातव्यः । प्रकृतिस्पन्दनसमुद्भूतं कर्म धर्माधर्मस्वरूपतां धत्ते, ततश्च नियमितानियमितफलप्रदमपि भवितुं शक्नोति, अतोधर्मप्रवर्त्तकेभ्यः सिद्धांतमिमं निश्चित्याभिधीयते यत् देशकालत्रिविधसप्तविधाधिकारान् लक्ष्यीकृत्य कर्मणि प्रवृत्तिर्युक्तकर्मेत्युच्यते । रहितबाधं नियमितफलप्रदं कर्म किल युक्तकर्म । इमान् पूर्वोक्तविषयान् ध्यानगोचरीकृत्य क्रियमाणे कर्मणि न कदापि वैफल्यसम्भावनेति ॥ २१८ ॥

अयुक्तक्रियाविषये प्रोच्यते—

**आनन्त्यमयुक्तायाः ॥ २१९ ॥**

अयुक्ताया अयुक्तक्रियाया आनन्त्यमनन्तशाखा संयुक्तत्वम्, अयुक्तक्रियापरिणामोऽनन्तशाखायुक्त इत्यर्थः। आध्यात्मिकेन भावेन, धर्मेण, मोक्षलक्ष्येन वा संबद्धा युक्तक्रियेत्युच्यते । यद्यपि युक्तक्रियायामप्यधिकारभेदोऽवश्यमेव, किन्तु तत्पद्धतिरेकैव । तद्विपरीताया अयुक्तक्रियायास्तु बहुशाखाभेदभिन्नत्वादानन्त्यमवधेयम् । यतो हि अयुक्तक्रियाया धर्मस्य मोक्षसिद्धान्तस्यनितरां राहित्यम्, तत्र केवलमिन्द्रियसेवाजनितार्थकामादीनामेव प्रेरणा । द्विविधमिदं लक्ष्यमनुसृत्य कर्त्तुर्बुद्धिरपि द्विविधा ज्ञेया । प्रोक्तं चात्र विषये गीतोपनिषदि—

**"व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ इति ॥**

आत्मनोह्येकत्वादद्वितीयत्वाच्च सर्वा अध्यात्मोन्मुखप्रवृत्तिकारिण्यः क्रिया युक्ता इत्यतस्ता ऊर्द्ध्वगामिभावसंयुक्ताः । यद्यपि युक्तक्रियायां मोक्ष एव प्रधानं लक्ष्यम्, परमभ्युदयसम्बन्धात् तत्राधिकारतारतम्यमपि सम्भवति । अस्तु, युक्तक्रियागतिस्तु प्रकारान्तरेणैकपरिपाटीसंवलितैव वेद्या । परन्त्वेतत्सूत्रवर्णिताया अयुक्तक्रियाया गतिस्तु तद्विपरीतेति न सन्देहः । यतस्तत्राभ्युदयनिःश्रेयसप्रदस्याध्यात्मिकलक्ष्यस्याभाव एव । यद्वद् विद्याराज्यमेकाद्वितीयात्मानुसन्धानपरम् । अविद्याराज्यमनन्तवैचित्र्यपरिपूर्णसुखदुःखात्मकभोगस्वरूपम् । तद्वदेवायुक्तक्रियाऽनन्त-वैचित्र्यपूर्णावस्था संवलिताऽयुम्पगन्तव्या ॥ २१९ ॥

इदानीं प्रसङ्गाद् भोगरीतिरुदीर्यते—

**द्विविधा भोगनिष्पत्तिः ॥ २२० ॥**

भोगस्य निष्पत्ति द्विप्रकारा वेद्या । क्रियाया मौलिकं भेदं प्रतिपाद्य सूत्रकारेण महर्षिणा भोगस्य मौलिको भेद; प्रोच्यते । यत्र क्रिया, तत्र प्रतिक्रियाऽपि नूनं भाविनी । यत्र कर्म, तत्र कर्मफलमपि नूनं भावि । मौलिकं विज्ञानमनुसृत्य स च कर्मफलभोग; श्रेणीद्वयेन विभक्तुं शक्यते, द्वाभ्यामप्यन्तःकरणशरीराभ्यां क्रिया सम्पाद्यते । यतोह्यन्त; करणप्रेरणामन्तरेण स्थूलं शरीरं नैव क्रियां कर्त्तुं नैव प्रभवति विना चान्तःकरणसाहाय्यं स्थूलशरीरं भोगनिष्पत्तिं कर्त्तुं नैव शक्नोति । अन्यच्चान्तःकरण एव स्थूलशरीरभोगचरितार्थता सम्भवा । उदाहृत्येदमवगन्तुं शक्यते यन्मूर्च्छितस्य निद्रितस्य (क्रमशः)

**शुभकामना—**

सूर्योदयस्य आकर्षकः आकारः मुद्रणरमणीयता, विषयवस्तुसंग्रहः गाम्भीर्यम्, सर्वं पाठकानामस्माकं मनांसि मोहयति। विद्यार्थिनः मनोयोगेन पत्रमिदं पठन्ति। कामये शाश्वतिकीं प्रगतिशीलतामेतस्य-

संस्कृत सोपान रचयिता—रामचन्द्र शास्त्री प्राध्यापकः

## विषयानुक्रम



## 卐 वसतु मे वदने सुरभारती 卐

मधुमती रसरीतिसमन्विता, विदितवेदविभा वरवर्णिनी।
स्मृतिपुराणनिकुञ्जविलासिनी, वसतु मे वदने सुरभारती॥ १॥

भरितभावसुधाध्वनिसंयुता, मधुरतादिगुणत्रयभूषिता।
सहृदयादृतवृत्तिविधान्विता, वसतु मे वदने सुरभारती॥ २॥

वाल्मीकिः व्यासभासौ कविकुलवलये मण्डितः कालिदासः,
दण्डी बाणः सुबन्धुः प्रथितपृथुयशा भारविश्चापिमाघः।
श्रीहर्षो वा कवीशाः सकलकृतिकृते यां समाराधयन्ति,
वन्दे तां ब्रह्मविद्यां श्रुतिसततनुतां संस्कृतां देववाणीम्॥ ३॥

—विनयो मिश्रः

पञ्जीकृत-संख्या—एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

**पत्र-संहिता**

१. 'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं [illegible] । धनादेश—( मनीआर्डर ) द्वारा तत्प्रेषणीयम् । वी० पी० पी० द्वारा प्रेषणे २/०० पृथक् [illegible] स्युः ।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते । नवीन-प्रथमाङ्कतः ( जनवरीअङ्कतः ) एव ग्राहकत्वं स्वीक्रियते । माध्यमिकेन केनापि अङ्केन न स्वीक्रियेत ।

३. आंग्लमासस्य २६ मत दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति । वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते । अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः ।

४. लेख-कवितादीनां भाषया संयतया, सरलया, शुद्धया च भाव्यम् । प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम् । अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते ।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्ट लेखनीयम् । तेन उत्तरलाभे मुधा विलम्बो न भवेत् ।

**विज्ञापनम्-शुल्कम्**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते । एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः ।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत । | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-१

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी कैण्ट ।
मुद्रणस्थान—[illegible] प्रेस, [illegible], वाराणसी ।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

वर्षम् ५४

卐

अङ्कः १२
दिसम्बर १९७७

卐

संरक्षिका
श्रीमती विद्यादेवीजी महोदया

卐

प्रबन्धसम्पादिका
श्रीमती एस० बी० पाई०

卐

वार्षिकं मूल्यम्
९/०० रूप्यकाणि

卐

प्रत्यङ्कमूल्यम्
१/०० एकरूप्यकम्

卐

सम्पादकः— डॉ० परमहंस मिश्रः

सहसम्पादकौ—
डॉ० कपिलदेव पाण्डेयः श्रीश्यामविहारी त्रिपाठी




## पदं ते

पदं ते कीर्त्तीनां प्रपदमपदं देवि विपदां,
कथं नीतं सद्भिः कठिनकमठीखर्परतुलाम् ।
कथंचिद् बाहूभ्यामुपयमनकाले पुरभिदा,
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥

नखैर्नाकस्त्रीणां करकमलसंकोचशशिभिस्,
तरूणां दिव्यानां हसत इव ते चण्डि ! चरणौ ।
फलानि स्वस्थेभ्यः किसलयकराग्रेण ददतां,
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥

ददाने दीनेभ्यः श्रियमनिशमाशाऽनुसदृशी—
ममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे,
निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ॥

सौन्दर्यलहरी ८८-९०

कर्माणि — काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि ।

निषिद्धानि—नरकाद्यनिष्टसाधनानि ब्रह्महननादीनि ।
नित्यानि—अकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि ।
नैमित्तिकानि—पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि ।
प्रायश्चित्तानि—पापक्षयमात्रसाधनानि चान्द्रायणादीनि ।
उपासनानि—सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि ।
[ एतेषां नित्यादीनां बुद्धिशुद्धिः पर प्रयोजनम् । उपासनानां तु चित्तैकाग्र्यम् ]

# अनुक्रमः



# श्री सरस्वती - स्तवनम्

रामस्वरूप शास्त्री 'अमर'

जननि ! त्वच्चरणयुगं प्रणमामि ।
सन्ततं सुर-पूजिते नमामि ॥
जयति सिद्धमुनि-वन्दित-चरणे !
परमदयामयि ! शुद्धाचरणे !!
अमरमानसांचल — संचरणे !
कमलासने ! भजामि ।
पदपद्मं ते जननि ! नमामि ॥१॥

मातस्त्वं भवभीतिविनाशिनि !
अज्ञहृदय — सज्ज्ञान-प्रकाशिनि !
श्वेततामरसनिकरनिवासिनि !
त्वां वरदे ! प्रणमामि ।
गुणगणान् सुरवन्दिते ! स्मरामि ॥२॥

हंसवाहने ! मुक्तिप्रदायिनि !
शुभ्रवसनवासिनि ! सुखदायिनि !!
सकलसुमङ्गलमूल-विधायिनि !!!
दर्शिते-पथि चलामि ।
तव पदयुगं नमामि ॥३॥

वेद-विबुध — बुधवृन्दनुते !
सुखदे ! ब्रह्मविचारयुते !!
वर-वीणावादिनि ! भव-मुदिते !!
यशो मुदा गायामि ।
अङ्घ्रियुगं प्रणमामि ॥४॥

पूरय त्वं शारदे ! मदिच्छाम्;
देहि सुमेधां याचितभिक्षाम् !!
कृत्वा सौख्यप्रदां मे शिक्षाम्;
इतस्ततो धावामि ।
नितरां तेऽङ्घ्रियुगं प्रणमामि ॥५॥

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५४ तमे वर्षे ] वाराणसी, आग्रहायण, दिसम्बर १९७७ [ अङ्क १२

## 卐 तन्मे मनः शिवसंकल्पमस्तु 卐

यत्प्रज्ञानमथ चेतो धृतिश्च,
यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किंचन कर्म क्रियते,
तन्मे मनः शिवसंकल्पमस्तु॥

येनेदं भुवनं भविष्यत्,
परिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्त होता,
तन्मे मनः शिवसंकल्पमस्तु॥ शु० य० ३४/३-४

शिवसंकल्पसमन्विते मनस्येव प्रज्ञाप्रकाशः पारिशेष्यतः समुल्लसतीति सत्यं संविदानः पारदृश्वा मन्त्रद्रष्टा महर्षिः स्वतः स्वयमेव स्वान्तं नितान्त प्रक्षालितमलं समीहते। सः आत्मनीनं विश्वजनीनं वा हृदयोद्गारं, परायाःवाचः परं तत्त्वं बैखरीवाक्षु पश्यति। अपौरुषेय्यां पीयूषरससारसमुद्रसरोजमकरन्दमनोहारिण्यां व्याहरणात्मिकायां वाचि अपगतमलावलेपेन निष्कल्मषेण मुनिना मनसः स्वरूपमेवादर्शि। यन्मनः प्रकर्षतया विश्वनिष्कर्षं विजानाति, यच्च चेतितृ, अकिञ्चनचिरन्तनयोश्चिंतनचरिष्णुतां चेतयति, यदाधृत्यैव धार्यं ध्रियते, येनैवान्धतमसः विनाशो, सज्ज्ञान-प्रकाशः प्रकाशते, यच्चामृतत्वेनोह्यते सर्वैः, यद्विना किमप्यनुष्ठातुं न शक्यते, एतादृङ्मे मनः विकल्पविरतं सत् सुसङ्कल्प-समन्वितं स्यात्।

मानसिकतायाः पारिणाम्यं परिचिन्वता चिन्तकेन अनुभूतिविषयीकृतं तथ्यमेतदस्ति यत् मनसैव त्रिकालज्ञता-प्याप्यते। इदममृतमस्ति! अनेनैव सर्वं परिगृहीतं भवति! विहायेदं नेन्द्रियाणि विषयरसास्वाद-सामर्थ्य-संवलितानि भवन्ति! अग्निष्टोमादिकाः मखा अपि येन कल्प्यन्ते—एतादृङ्मे मनः विकल्पविरतं सत् शिवसंकल्पसमन्वितं वर्त्तताम्!

# श्रीमहर्षिज्ञानानन्दचरितं महाकाव्यम्

स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः

## [ अथ त्रयोविंशः सर्गः ]

अस्य श्रीमद्गीतकीर्त्तेर्महर्षेः प्रातः सायं वन्द्यपादाम्बुजस्य ।
जीवन्मुक्तस्याप्रमेयस्य बोधे शक्या द्वेधा सन्ति भक्ता विभक्तुम् ।।१।।

एके ते ये मन्त्रशिष्याः प्रगीता विद्याशिष्याः सन्ति चान्ये तथैव ।
एतेषां ये सुप्रसिद्धा महान्तस्तेषां चर्चा सम्भवा नेतरेषाम् ।।२।।

पृथ्वीपाला याश्च तद्धर्मपत्न्यः संख्यातीतास्तस्य दीक्षां प्रपन्नाः ।
तेषां तासामर्थसहाय्यमाप्य योगीन्द्रोऽसौ धर्मकृत्यं वितेने ।।३।।

रम्यः काश्मीरश्च नेपालदेशः सैलाना सा वीरचित्तौर-भूमिः ।
दर्भङ्गा सावल्बरः सा सिगाँही डूँगर् पूर्यंन्नारसिंहं गढं च ।।४।।

अन्नत्या ये धार्मिका भूमिपालास्तेषां पत्न्यश्चापि याः पुण्यशीलाः ।
दीक्षाकाले दत्तमेभिर्धनं यत् पत्या न्यस्तं धर्मकार्ये यतीनाम् ।।५।।

तेजोधामा श्रीदयानन्दनामा योगानन्दः श्रीपरानन्दसंज्ञः ।
आनन्दोऽसौ यो विवेकेन युक्तो विद्यानन्दश्चेति शिष्यास्तदीया ।।६।।

विद्वद्वन्द्यो नैष्ठिकब्रह्मचारी श्रौतस्मार्त्तज्ञानवान् ब्रह्मवादी ।
श्रीमान् स्वामी यो दयानन्ददेवः शेषोऽशक्तस्तद्गुणान् संप्रवक्तुम् ।।७।।

पौरस्त्यं यद् यच्च पाश्चात्यमृद्धं सद्विज्ञानं तस्य यः पारदृश्वा ।
लेखन्यां वा यस्य जिह्वाप्रदेशे वाग् वश्येवासीन्नरीनृत्यमाना ।।८।।

पूर्वं जातो यो यतिस्तत्सनामा प्रायः सत्यं खण्डयामास शास्त्रम् ।
तत्पापं संहर्त्तुकामो जनिं स्वां सम्प्राप्यासौ शिष्यतां तस्य चागात् ।।९।।

वंगीयोऽसौ हैन्दवीं वाचमेनां प्रेम्णाश्रित्यारीरचद् ग्रन्थराशिम् ।
सत्यार्थानां सद्विवेकेन युक्तं तेनात्रत्यास्तस्य सर्वेऽधमर्णाः ।।१०।।

( क्रमशः )

**सम्पादकीयम्**

# महद्भयं वज्रमुद्यतम्

स्वात्मप्रकाशोत्कर्षविमर्शप्रसङ्गे परायाः संविदः प्रव्यक्तस्पन्दनशीलं प्राणरूपं तत्त्वं परामृशन्ती कठश्रुतिस्तथ्यमेतद्व्यनक्ति--

**यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति॥**

कठ० २-३-२

तत्त्वानुसन्धित्सूनां प्रज्ञापारदृश्वनामिदं नैवाविज्ञातमस्ति यद् प्राणाः प्रमातृपरमैश्वर्योत्कर्षप्राकट्यप्रतीकाः संविद एव स्वरूपाः भवन्ति ! 'प्राक् संवित् प्राणे परिणतेति दैशिकेश्वराणामुक्तिः सुस्पष्टं समर्थयति सिद्धान्तमेतम् !

अनन्तप्रकारायमाणेऽस्मिन् भेदप्रथाप्रथितप्ररोहप्रकर्षेऽण्डकटाहे आपामरपण्डितैरेतत्प्रत्यक्षमेवानुमीयते यत् प्राणान् विना न किमपि वस्तु स्वतः स्पन्दितुं शक्ष्यति, शशाक, शक्नोति वा !

सर्वं वस्तु, सर्वं करणीयम् प्राणानां कृते एव प्रियं भवति। प्राणाधीनान्येव निखिलानीन्द्रियाणि विषयरसास्वादसव्यापृतानि दृश्यन्ते। औपनिषदिकीयं कथा सर्वविदिता वर्त्तते-स्वस्वमाहात्म्यं ख्यापयितुं परस्परं कलहायमानेष्विन्द्रियेषु प्राणनिःसरणप्रकरणे एकैकशस्तेषां विशीर्णत्वम्। प्राणधारिणां प्राकृतिकीयं प्रक्रियावलोक्यते यदेते यदाकदापि समागतेषु असंख्यातेषु संकटेषु प्रथमं प्राणरक्षणकर्मण्येव संप्रवृत्ताः भवन्ति। अन्यानि वस्तूनि तु यदाकदापि पुरुषार्थतयोत्पादयितुं शक्ष्यन्ते किन्तु प्राणप्रयाणे तु निखिलं निष्फलमेव नितरां निश्चप्रचमिति प्राणत्राणप्रणाल्यां प्रणिनिहितावधानाः भवन्ति प्राणिनः।

छान्दोग्यानुज्ञानं भोक्तृभिः प्राणानामेव संप्रीणनाय प्रथमम् 'प्राणाय स्वाहा' इत्युच्चार्य भोजनमुपभुज्यते, याज्ञिकैश्च प्राणाय स्वाहेत्युच्चार्यैव प्रागिज्यते, प्राणेषु तृप्तेष्वेव सर्वेन्द्रियाणि, सूर्यः, द्युलोकः, सर्वलोकाधिष्ठितश्चात्मा तृप्यति ! आत्मा-मनोमयः वाङ्मयःप्राणमयश्च भवतीति-बृहदारण्यकोपनिषत् आचष्टे। प्राणा एव स्वर्गः, सामवेदः, मानवः। किं बहुना ब्रह्मरूपे चैतेषामेव स्थितिः। एवं प्राणप्रीणनं प्राणिनां पुण्याय भवति !

प्राणिनः पारतंत्र्यपीडामनुभवन्तः सर्वदैव स्वातन्त्र्यसुखसमृद्धयुपलब्धये प्रयतमानाः स्वात्मसंप्रीणनव्यापारसंव्यापृताः दृश्यन्ते। केऽपि तत्र साफल्यं भजन्ते केप्यसाफल्यमिति। प्राणिषु मानव एव शेमुषीकतयाऽतिशेते। मानवः कर्त्तव्या-कर्त्तव्यनिर्णये स्वतन्त्रः स्वेच्छं श्वसिति, सदसद्विवेके समर्थः, सत्यमसत्यं वा स्वीकर्त्तुं स्वच्छन्दः जीवनव्यापारान् विदधाति किन्तु केचिददैवैतादृशाः भाग्यशालिनः भवन्ति ये, गम्भीरतया समग्रं विश्वसन्दर्भं हृदि निधाय स्वकीयान्याचरणानि निश्चिन्वन्ति। कार्य-साफल्ये वैफल्ये वा को हेतुरित्यपि विचारणीयो विषयः। पुरुषकारे कृतेऽपि कार्यसिद्धौ भाग्यं दैवमदृष्टं वा कारणमाममनन्ति मनीषिणः।

साम्प्रतिकाः सर्वेऽतिवादिनः वैज्ञानिकीं भौतिकीं परिणावादितां जीवनोपलब्धिं मन्वानाः कथमप्युपर्युक्तं भाग्यादिकं तथ्यं स्वीकर्त्तुं तत्परा नहि सन्ति ! एते जीवनमपि सांयोगिकमेव मन्वते ! प्राणानां प्राप्तिमपि पारम्परिकतामेव मानयन्ति !

भाग्यस्यादृष्टस्य दैवस्य वा साक्षात् भवति संबंधः कर्मणा। कर्मवादे सञ्चितक्रियमाणप्रारब्धभेदभिन्ना कर्मश्रेणिः स्मृतिशास्त्रेषु प्रतिपादिता वर्त्तते। कर्मप्राधान्यवादे पुरुषार्थस्य महत्त्वमङ्गीक्रियते, तत्र भाग्याधीनमेव पुरुषार्थः इत्यपि

विचार्यते । शरीरं तु निमित्रमात्रं भवति । कर्मवादे भाग्यवादे वा सर्वत्र प्राणवत्ताया एव प्राधान्यम् ।

प्राणिषु श्रेष्ठः पुरुषः व्यक्तिशः यदा पापीयसीं वृत्तिं स्वीकरोति, स एव तत्परिणाममुपभुंक्ते । त्रिवर्षैर्मासैः पक्षैर्दिनैर्वा कोऽपि स्वकृतकर्मणः पारिणाम्यमाप्नोति । एवमेव समाजद्वारा; सम्पादितस्य कुत्सितस्य व्यापारस्य फलेन समाजश्च प्रभावितो भवति । कस्यचिदपि देशस्य दौर्गत्यगर्हणम् सामाजिकस्य पापस्यैव परिणामः भवति । पुरुषाणां जीवने व्यक्तिशः प्राणसंकटे आपन्ने स्वयं स एवास्योत्तरदायी भवति किन्तु यदा देशे कस्मिश्चिद्-भूभागे वा प्राणप्रलयलोलाकौटिल्यमवलोक्यते तदा ध्रुवं समाजस्य सामूहिककार्यनिवहस्य फलं भवति !

प्राणोपरि संकटस्य विभिन्नानि रूपाणि भवन्ति । प्राणेषु संकटापन्नेषु मृत्योः मारणमहोक्षत्वं मर्त्यानां मर्दनार्थममन्दन्तया मदोत्कटायते । तद्यथा-सत्यवचनाच्च्युतिः, अकर्मप्रवृत्तिः, अनाचारदुराचारात्याचारादिपु व्यापारेषु विपरीताचारः—सर्वमेतत्प्राणताप्रतिकूलम् एव भवति, किन्तु कामान्धः, स्वार्थान्धः, विभिन्नहीनमतवाददूषितशेमुषीकः प्राणी नानुभवितुं शक्नोति तत्राप्रत्यक्षेपु मृत्युरूपेषु दूषणम् ।

किन्तु प्रत्यक्षेषु संकटेषु सः साहाय्यार्थं सत्नारस्वरं विरौति, आपतितेषु प्राकृतिकक्रूरकशाघातेषु सः विरूपतया विह्वलो भवति ! किन्तु हन्त ! रे ! महामायामोहमौग्ध्यम् यत्तदपि न निश्चिनोति किमस्याप्रत्याशितस्य दंभोलिसंघातवद्हतकस्योपद्रवस्य कारणमिति ! न वा वेत्तुं शक्यते तेन यद् महद्भयं वज्रमुद्यतं वर्त्तते शाश्वतिकम् शिरःसु !

सर्वैरस्माभिः भेतव्यं ह्यनवरतप्रलम्बमानवज्रप्रहारैः । उद्यतं वज्रं महद्भयजनकमिति श्रुतिरश्रान्तमवबोधयति विश्वं किन्तु सा एव दशा वर्तते जीवजगतः, यथा प्रबोधितेन व्यासेनोक्तं महाभारते—

ऊर्ध्वबाहुर्विरौम्येषः नहि कश्चिच्छृणोति मे ।
परोपकारः पुण्याय, पापाय परपीडनम् ।।

अत्रोर्द्ध्वबाहुविरावे-अयमेव हेतुः यज्जगत् पुण्याचरणविरतं पापप्रवृत्तं तैर्व्यलोकि ! साम्प्रतमपि सैवावस्था समुपस्थिता वर्त्तते ! महाभारतकाले यथा दुर्योधनकंसजरासन्धात्याचारोद्ध्वस्तः धर्म आसीत् सम्प्रत्यपि तथैव चतुर्दिक् दृग्गोचरीभवति !

अधुनाऽपि धर्माधर्मविचारे स्वैरतैव दृश्यते । यत्र शास्त्राणि समुद्घोषयन्ति-धर्म एव विश्वधारकः, धर्मनियन्त्रितौ एवार्थकामौ स्याताम्, तेनैव मोक्षः साध्यो भवति, तत्र मूल एव कुठाराघातः ! राष्ट्रमेव धर्मनिरपेक्षमुद्घुष्टं वर्त्तते !

यत्र सिद्धवाक् वाल्मीकिः अचीकथत्—

चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति !
वा० रा० १।९६

तत्र जनताशासनसंचालकाः चातुर्वर्ण्यं सर्वजनहिताय समूलमुज्जास्य सम्पूर्णक्रान्तिमिथ्या-मोहमुग्धतामात्मसात्कर्त्तुं प्रवृत्ताः सन्ति !

अनवरतं नैतिकताया ह्रासमवलोक्यापि नेत्राणि संवृत्य पातित्यमेव युगोपलब्धिं मन्यमानाः जननेतारः वास्तविकतां नितरामुपेक्षन्ते ।

अकस्मात्आन्ध्रप्रदेशे भोषणेन सामुद्रिकेण कल्पनातीतेन झञ्झाप्रभञ्जनेन या विभोषिका अप्रत्याशितमेव समुत्पादिता सा किमित्यहं पृच्छामि ! महाप्रणाशेनैव मन्ये क्रूरं करालमास्यं व्याददानेन दुर्धर्षदंष्ट्रासु असंख्याताः जीवधारिणः समाहिताः व्यापादिताश्च ! प्रलयङ्करेण भयङ्करेण रुद्रेणैव मन्ये ताण्डवमेवं प्राकाटि—तन्निश्चयमेव सामाजिकस्य पातित्यस्यैव दुष्परिणाम इति मदीया सम्मतिः ।

तत्रत्यः वैवश्यविध्वंसः, अपरिमेयसम्पदां विनाशः, पशूनां प्रणाशः, मानवसंघातविघातः, प्राणिनां च निपातः, वर्त्त-

माने विक्रमशताब्दे सर्वाधिकं संत्रासकरः मर्मच्छेदकः हृदयोद्वेगकरश्चासीत्। तत्र लक्षाधिकाः लोकाः प्राणरैपाकृताः, द्वाविंशवर्गगव्यूतिसगतायां भूमौ विकासितानि सस्यानि पूर्णतया विनष्टानि ! सम्पत्तिक्षतेस्तु कथैव कारुण्यकारिणी, प्रजायाः शासनस्य चाप्रत्याशिता क्षतिस्तत्र यादृशी जाता तां स्मारं स्मारं रोमहर्ष एव जायते ! अद्यावधि [लिखनव्यापार पर्यन्तम्] तत्र यत्र तत्र प्राणिनां पार्थिवानि निष्प्राणशरीराणि पोपूयन्ते, पूत्या च दिगन्तं गर्हिततया ग्लेपते। वक्तुं शक्यते यत्तत्रत्या जनलक्ष्मीः लेलिहानेन लोमहर्षकेण सागरत्वरोत्फालनेन समग्रतयैव निगीर्णा।

पुनः पुनः विनम्रतया श्रद्धाग्रहग्रहिलतया विज्ञापयामि विज्ञान्, सादाशयतया सभ्यवतया च विचारणाय यत् इयं भगवल्लीलास्थली सामगानसंगीतिकास्वनसंपूरितदिगन्तराला प्रकृतिकमनीया रमणीययं ऋषिमुनिसिद्धिसंविधात्रीभूतधात्री भरतभूः सम्प्रति कया व्यथया व्यथिता कम्पते ? कथमयमदभ्रवज्रपातः सर्गसत्तामेव दिध्वंसिषते।

एषः समयो भवति चिन्तायाः विषयः। एतादृशे संपद्यमाने विपत्तिकाले धृत्या कृत्यमवधार्य, विपद्ग्रस्तान् विपदः विमोच्य असहायान् साहाय्यदानेनानुगृह्य शान्त्या मननीयोऽयं विषयः यत् अस्माकं शिरःसु प्रलम्बमानं महद्भयं वज्रमनारतं चेतयति शिक्षयत्यस्मान् जीवनपद्धतिपरिष्काराय, स्वसर्गसंविधातारं धातारं सर्वशक्तिमन्तं परमेश्वरं स्मर्तुं, येन जीवने किमप्यकार्यं मा स्यात्। धर्माचरणेन जीवनं धन्यं स्यात्। इममेव तथ्यं स्वीकुर्वता व्यासेन व्याहृतम्—

गृहीत इव केशेषु मृत्युना धर्ममाचरेत्।

पूर्वतोऽनुवृत्तम्—

# संस्कृतकाव्यानि

—वि० कृष्णास्वाम्ययङ्गार्यः

**प्राचीनता**—भारतीयानां ज्ञानभाण्डागारभूता संस्कृतभाषा तावत् स्वकीयं साहित्यमितरेषामभिभवमन्तरेणैव नितरामभ्यवर्धयत्। परकीयानामभियोगात्प्रागेव भारते संस्कृतकाव्यानि संपूर्णरूपेण परिनिष्ठितानि दृष्टिपथमवातरन्निति तेषां प्राचीनता सत्यमविवादास्पदम्। वाल्मीकिरामायणमेव हि काव्येषु प्रथममुदाहरणं दृश्यते। काव्यशैली तावत्तत्र सम्यगभिवृद्धा लक्ष्यते। ग्रीकाणामभियोगो हि साहित्यक्षेत्रे न कमपि विपरिणाममकार्षीत्। भारतीयानां ज्ञानप्रधानेषु क्षेत्रेषु महती कीर्तिरुचितैव। एतादृशी परकीयप्रभावानास्पदता संस्कृतसाहित्यस्यानितरसाधारणमुत्कर्षं गमयति। तस्मिन्नेव वर्षसहस्रत्रयात्प्राचीने काले पाश्चात्यदेशेषु सामाजिकी धार्मिकी वा समुचिता व्यवस्थैव नासीत्। भारते परं सांस्कृतिकी प्रगतिस्सर्वव्यापिनी जनजीवने प्रधानमङ्गमिति पर्यगण्यत। औपनिषदानि तत्त्वानि सर्वेषामपि परिचितान्यासन्। आगोपालाङ्गनमाच पण्डितं पारमार्थिकी पारलौकिकी धार्मिकभावना प्रचचार एव। परेषामभियोगेष्वप्यभिभवमनवाप्तवती भारतीया संस्कृतिस्सर्वोत्कृष्टा ववृधे। साहित्यमपि भारतीयानामेव बुद्धिबलेन नानाविधे

ष्वाकारेषु प्रकटीबभूव। चीनदेशमेकंविना न कुत्राप्यन्यत्र पाश्चात्ये पौरस्त्ये वा देशे भारतवत् प्राचीनकालादारभ्याद्यावधि किञ्चिदप्यविपर्यस्यत् परेषामभिभवमनश्नुवानं वा साहित्यं संस्कृतिरन्यद्वा संप्रतिपन्नमस्ति। एषा च प्राचीनता संस्कृतकाव्यानामधिकं यशः प्रददाति।

**विभागः**—संस्कृतसाहित्यं तावत् प्रथमतो वैदिकं संस्कृतञ्चेति द्वेधा विभागमर्हति। वैदिकसाहित्यस्य कालश्च ५५०० क्रि० पू० वर्षादारभ्य २०० क्रि० पू० वर्षपर्यन्तमिति विमर्शकानामाशयः। अत्र च धार्मिका नियमाः पारलौकिकं विज्ञानं ब्रह्मज्ञानमित्यादयो विषयास्सम्युपन्यस्ताः। भारतीयानामशेषाणामपि वेदवाक्यानि प्रमाणानीत्यत्र न कश्चिद्विवादः। श्रुतिवचनानां शाब्दिकं प्रामाण्यमपौरुषेयतावादिभिः शास्त्रकारैर्निरणायि। स्मृत्यादीनान्तु श्रुत्यविरुद्धानामार्थिकं प्रामाण्यमिति व्यवस्थापयन्तः शास्त्रकाराः श्रुतीनां परं प्रमाणान्तरानपेक्षं प्रामाण्यमामनन्ति। एतावती वैदिकसाहित्यस्य भारते बहुमतिः। वैदिकसाहित्यस्यांत्यकाले समुपक्रान्तं संस्कृतसाहित्यं ( अत्र संस्कृतपदं लौकिकव्यवहारपथमनुप्रविष्टां गोर्वाणवाणीमभिदधाति। वेदभाषायां व्याकरणनियमानामनेकेषामननुगमात्तत्र वैदिकसंस्कृतमिति, व्यावहारिकभाषायान्तु नियमानामनतिलंघनोयतया संस्कृतसंस्कृतमिति च व्यपदेशः प्रवर्तते ) माहम्मदानामभियोगं यावत्—क्रि० श० १००० पर्यन्तम्—संभृतशोभमुपचीयमानग्रन्थकोशमभिवृद्धिपदवीमवजगाहे। ततः परमपि काव्यानां विनिर्माणं न सम्पूर्णतया विनाशमार्गमवालम्बत, परन्तु तादृशान्यर्वाचीनकाव्यानि नातीवरम्याणि भवन्तीत्येक एव दोषस्तेषु, विषये साहित्यविमर्शकंमन्यैस्सर्वैरप्युद्घुष्यते। वस्तुतः काव्यानीमानि पण्डितप्रकाण्डैर्निसर्गप्राप्तया प्रतिभया निबद्धानि रसिकानावर्जयंत्येव। काव्येषु चैतेषूपलभ्यमाना भाषाशैली प्रौढा सरला च तत्तद्विषयानुगुणा दृश्यते। दुरवबोधैः कठिनैरपरिचितैः शब्दैस्संवि-हिताश्चेद्दीर्घसमासाः काव्यस्यानादरणीयतामुपधास्यन्ति, कथंतर्हि मुरारेर्भवभूतेर्बाणभट्टस्य च महाकविषु परिगणनमुचितम्भविष्यति? प्रायो नाटकेषु सरलानि गूढगम्भीरभावार्थानि पदान्युपयोक्तव्यानि भवन्ति। मुरारिस्तु कठिनकठोराणि पदानि पण्डित्यप्रदर्शनायोपयुञ्जानः कथं नाम कीर्तिभाजनमभवत्? कथञ्च कादम्बर्यामनतिप्रसिद्धानपि शब्दान्यथाकामं विनियुञ्जानो बाणभट्टः कवित्वव्यपदेशमर्हति? यद्येतादृशानां संस्कृतभाषादेवीसेवकानां महानुभावानां पाण्डित्यप्रकर्षप्रदर्शनं प्रौढभणितिघोरणीस्वीकरणञ्च कीर्तिप्रदमभिमन्वते विमर्शकाः, किमपराद्धमर्वाचीनैः काव्यनिर्मातृभिरिति तु विचारणीयमेवैभिः। "सीतारावणसंवादझरी" "सत्यानुभावम्" इत्यादयः काव्यग्रन्था न किं रसिकानामाह्लादका भवन्ति? महाकवीनां मार्गदर्शी कालिदासोऽपि स्वकाले प्राचीनकाव्यानामेवादरणात् स्वकाव्यानामपुरस्कारमाशशङ्के, यदाह—"मा तावत्। प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः?" "इति। गतानुगतिकस्य वस्तुपरीक्षायामनुत्सहमानस्य लोकस्य भ्रान्तिं दूरीचिकीर्षुः, 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्य" मिति स्पष्टोक्तिभिरुपदिदेश च। अथाधुनिकानां काव्यानां तिरस्कारविषये किमु वक्तव्यम्। दौर्भाग्यमेतत् संस्कृतभाषाया यदर्वाचीनानीत्येकेन कारणेनानन्तरकालनिर्मितानि सर्वाण्यपि ग्रन्थरत्नान्यवमन्यन्ते। पाश्चात्यविमर्शकाश्च गोर्वाणभाषानभिज्ञाः काव्यसौन्दर्यमनुभवितुमशक्ताः किमपि यथेच्छं विलिखन्तिस्म। तेषामाशयमनुरुध्य १००० क्रि० श० पर्यन्तमेव संस्कृतसाहित्यकाल इति विनिर्णयमापतितम्। वस्तुतः काव्यरचनापद्धतिरल्परूपेणाऽधुनाऽपि प्रसरत्येवेति सुवचम्।

**काव्यानां कालः**—श्रीमतो हर्षवर्धनस्यास्थाने बाणो नाम महाकविः कादम्बरीनाम्नीं महतीं कादम्बरी (novel)

मरचयत्[१]। श्रीहर्षवर्धनश्चैष सप्तमशतकस्य पूर्वार्धे (६०६-६४८) राज्यमकारयदित्यैतिहासिकैः प्रमाणैर्निर्धार्यते। बाणभट्टश्च हर्षचरिताभिधानं चारित्रकग्रन्थं निर्मिमाणः कांश्चन पूर्वकालिकान् कवीन्नाम्ना निर्दिदेश। तेषां च कृतयोऽद्योपलब्धा दृश्यन्त इति श्रीहर्षात्प्रागेव काव्यसाहित्यस्यारम्भो विनिर्णीयते। एवमपि सप्तमशतकात्प्राक् कः कविः किं वा ग्रन्थरत्नं कदा निबबन्धेति स्पष्टैर्वचनैर्न निर्णेतुं शक्यते। कालिदासः, सुबन्धुः, भारविः, गुणाढ्यः इत्यादयः कवयः कं देशं कस्मिन्काले स्वीयजन्मना कृतार्थमकार्षुरित्यत्र प्रबलमैतिहासिकमेकमपि प्रमाणं नोपलभ्यते। चरित्रग्रन्थनिर्माणे भारतीयानामनादरादेव दुरवस्थैतादृशी समजायत। सर्वमपि दैवायत्तं कर्मानुगुणं संपत्स्यते, पुरुषकारापेक्षया दैवस्यैव प्राबल्यम् दुरदृष्टपीडितो जन्तुर्विवेकशाली सन्नप्य वनतिमुपैष्यतीत्यादिरीत्या दैवस्य जगन्निर्वाहकतामुपपादयन्तो नियतिवादलब्धलक्षा भारतीया विद्वान्सो धार्मिकेष्वाचारेषु यापितदिवसा ऐहिकजीवने धनार्जनादिपराङ्मुखा अपि सुखमनुभवन्तो न चरित्रग्रन्थनिर्माणमावश्यकमुदपश्यन्। राजकीयक्रान्तेस्समरसमारम्भग्यैत्यादीनां राष्ट्रविप्लवानामेव किलेतिहासे वर्णनमुचितमावश्यकञ्च। तादृशानामन्योन्यकलहमूलकानां भीतिकरसङ्ग्रामाणां तृप्तिशान्तिमये, प्राणिहिंसायामपि दोषमनुपश्यति मानवहत्याया मादरशून्ये भारतेऽनवकाशाद्विषयाभावादेव चरित्रलेखनमनावश्यकममन्यन्त सूक्ष्मदृष्टयो भारतीयाः। कीर्तिकामुका अपि काव्यनिर्मातारः कुतो वा स्वीयं नाम देशकालादिकञ्च ग्रन्थेषु न निरदिशन्नित्यप्याश्चर्यकरमेतत्। कालिदासादयोऽर्वाचीना नाटककाराः प्रस्तावनासु कविकाव्यनामानुकीर्तनं सांप्रदायिकमपरित्याज्यमित्यभिप्रायेण नाममात्रं प्राचीकटन्। भासस्तु तदपि कर्तव्यमनावश्कं मन्यमानः सूत्रधारकृतारम्भेष्वपि नाटकेषु प्रस्तावनामल्पीयसीमुपनिबबन्ध। अर्वाचीनास्तु सर्गान्ते नाम गोत्रं वंशजानां प्रसिद्धानां पित्रोश्च नामधेयानि यथासमीहितं केचिदलिखन्, केचित्तु तूष्णीम्भावमेव बहुमेनिरे। एवञ्च ग्रन्थस्थैरान्तरैरमीभिः प्रमाणैर्न कश्चिदपि विषयो यथावन्निर्णेतुं शक्यः। भाषाशैली, शिलाशासनेषु नामनिर्देशः, बाणादिभिः प्राचीनानामुल्लेखः, इत्यादिभिर्बाह्यप्रमाणैरेव देशकालादिकमवधारणीयमुपलभ्यते। अत एव कालिदासप्रमुखानां विषये किमपि निश्चितरूपेणाभिधातुमसमर्थाः सन्ति विमर्शकाग्रेसराः। परन्तु वराहमिहिरस्य बृहत्संहिता तावन्निर्विवादं षष्ठशतकस्य मध्यभागे विलिखितेति निर्णीतम्। अस्मिंश्च ग्रन्थे काव्यशैली समीचीन रीतावुनिपबद्धा दृश्यते। कालिदासादीनां ग्रन्थास्तावत् सप्तमशतकस्य प्रारम्भे महतीं प्रख्यातिमुपगता वितर्क्यन्ते। यतस्तेषां कवीनां नामानि ६३४ क्रि. श. वर्षीये शिलाशासने बाणस्य हर्षचरिते च निर्दिष्टान्युपलभ्यन्ते। सुबन्धुश्च बहुषु स्थलेषु गुणाढ्यमुल्लिखति। अतो गुणाढ्योऽतीव प्राचीनः परिगण्यते। एवमेव केचन कवयः सत्यं प्राचीनतमाः परिसंख्यायन्ते। प्रबलानां प्रमाणान्तराणामनुग्रहलाभे तु बहूनामन्येषामपि कवीनां देशकालादिकं निश्चयपदवीमुपगमिष्यतीत्यत्र न विवादः। भारतदेशस्य सामाजिको राजकीयश्चेतिहासः क्रि. शतकस्यादिमेषु पञ्चशतकेषु न विज्ञात इति कवीनां जीवितवृत्तमप्यज्ञातमेवावतिष्ठते। एतावन्तञ्च महान्तं काल 'मन्धकारयुग' मिति व्यपदिशन्ति। हन्त! दौर्भाग्यमस्माकं भारतीयानाम्। तथापि काव्यानामारम्भकालः क्रिस्तशकस्यादिमं शतकमिति वक्तुं शक्यते। अश्वघोषेण हि बुद्धचरितनामकं महाकाव्यं व्यरचि। एष च कविः कनिष्कस्य समकालिक इति बौद्धानामितिहासग्रन्थो वदति। कनिष्कस्य कालोऽपि क्रिस्तशताब्दस्य प्रथमशतके राज्यमकार्षीदिति स्पष्टमवगम्यते। तथाच तस्मिन्नेव प्राचीनकाले काव्यसाहित्यस्यारम्भस्समवर्ततेति निश्चप्रचम्। एवं सम्भवदुपपत्तिकेऽप्यस्मिन्सिद्धान्ते बौद्धानामुक्तिष्वविश्वासिन इव पाश्चात्याः क्रिस्तशताब्दतृतीयशतकादारभ्य काव्यानामुत्-

तिरिति निर्णयन्तीत्येतद्यत्सत्यं विवादकरमस्माकम् । रामायणस्य कालः क्रि. पू. ५०० वर्ष इति म्याग्डोनलो वदति । रामायणे च वर्णनापद्धतिरलङ्काराणां संनिवेशश्च बहुधा प्रगतिमवापतुः । तत्रैव काव्यशैल्यास्समुत्कर्षदर्शनात् तस्मिन्नेव काले काव्यानामारम्भो बभूवेत्यपि केचिदुदाहरन्ति । "रामायणे तावदुपलभ्यमाना सरणिः काव्यानां पद्धतेर्विभिन्ना । तत्र हि धर्मप्रतिपादनमेव प्राथमिकं लक्ष्यम् । युद्धादिवर्णनावसरे च वाल्मीकिर्यद्यप्यर्वाचीनान्कालिदासादीनप्यतिशेत इत्यभिमानबलादुच्येत, तथाऽपि रघुवंशादिषु काव्येषु दृश्यमाना सरलगम्भीरा संगृहीतरूपापि विस्तृतगूढार्था व्यञ्जनाप्रधाना सरणिर्न रामायणे कुत्राप्यवलोक्यते । काव्यानि चानतिविशालस्वरूपाण्यनतिसंक्षिप्ताकाराणि च भवन्तीति लाक्षणिका उद्घोषन्ति । रायायणे तु ५४७ सर्गाः सन्ति, २४००० पद्यानि । एवं च महीयानितिहासो न काव्यव्यपदेशभाग्भवितुमर्हति । आदिकाव्यमिति व्यवहारस्तु काव्यशैलीप्रारम्भमूलतया संगच्छते । रामायणमेव काव्यमार्गप्रदर्शकमिति विमर्शकैस्सिद्धान्तनात्" इति वदन्तस्तु काव्यानामुत्पत्तिः क्रिस्तशताब्दप्रारम्भदशायामेवेति साग्रहमुपन्यस्यन्ति । सर्वथा काव्यानाममीषां प्राचीनता स्पष्टैव ।

अत्र म्याक्समुल्लरस्तावत् संस्कृतकाव्यानि सर्वाण्यपि — विनाऽश्वघोषस्य ग्रन्थान् — षष्ठशतकादर्वाचीनान्येवेत्यभिदधाति । शकानामन्येषां च विदेशीयानामभियोगेन भारतीयाः क्रिस्तशताब्दस्य प्राथमिकयोर्द्वयोः शतकयोरुपाद्रूयन्त । परेषामभिषेणनेन राज्यविप्लवे संप्राप्ते भारते कथमिव साहित्यरचना पदं लभेत ? अधिकारिकेषु स्थानेषु विपर्यस्यत्सु राजाश्रयस्यासम्भवात् कवीनां काव्यनिर्माणे प्रवृत्तिविच्छिदे । परकीयानानामुपद्रवेण प्रशान्तं जीवनं निर्वोढुमशक्नुवानाः कवयः प्राणसंरक्षणाय गुप्तस्थानान्यन्विष्यन्तो यत्रकुत्रापि भीताभिरितराभिः प्रजाभिस्साकं पलाय्य जीवितुमुद्योतिरे । एतस्यां रक्षकहीनायां दुरवस्थायामितस्ततो विप्रसरन्तः कवयः कथं नाम ग्रन्थरचनामाद्रियेरन् ? अतः परकीयानां पीडया तस्मिन्काले काव्यनिर्माणकार्यं नावकाशमलभतेति वादस्सम्प्रतिपन्नप्रायः । फर्ग्यूसन्महाशयस्य कालगणनासम्बद्धः (Chronological) सम्भावनासिद्धान्तः (hypothesis) म्याक्समुल्लरस्य वादे प्रथमं कारणम् । उज्जयिनीनगरे विक्रमादित्यनामा कश्चन नृपतिः षष्ठशतकस्य मध्यभागे राज्यमकुरुत । विक्रमादित्यस्यास्थाने कालिदासादयो नव महाकवयोऽवर्तन्तेति 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्ये'' त्येतत्पद्यं प्रतिपादयति । यद्यपि बृहत्संहिताकारस्य वराहमिहिरस्य कालः षष्ठशतकस्य मध्यभाग एवेति सुनिश्चितमवधारितम्, तथाऽपि धन्वन्तरिप्रभृतीनां नवानामप्येतेषामैककालिकत्वस्य प्रमाणान्तरविरोधेनासम्भावनीयतया पद्यमेतदप्रामाणिकमेवेति कालगणनाशास्त्रविशारदानामाशयः । परन्तु कालिदासो विक्रमादित्यस्यास्थानमलञ्चकारेति सार्वजनिकी प्रतीतिः फर्ग्यूसन्पण्डितं भ्रामयामास, यतस्स विक्रमादित्यनाम्नो राज्ञः कस्यचित्पूर्वोक्तरीत्या षष्ठशतकमध्यभागे स्थितिमनुमिमानः कालिदासादीनपि तदास्थानस्थानङ्गीकुर्वाणः काव्यानामारम्भकालमपि तादात्विकमेव सिद्धान्तयामास । एष च विक्रमादित्यः शकान्पराजित्य भारतदेशात्तन्निरवासयत्, स्वीयस्य महाविजयस्य स्मारमेकं शताब्द (ear) मपि प्रतिष्ठापयामास । अस्य च शताब्दस्य विक्रमशक इति नामधेयं प्रख्यातमुपलभ्यते । क्रि० श० ५४४ वर्षे विक्रमशकं प्रतिष्ठापयन्नेष राजा ६०० वर्षान्प्रथममेव गणयामास । तथा च क्रि०पू० ५७ तमवर्षादारभ्य कालं गणयन् विक्रमशकं प्रचारयाम्बभूवेति फर्ग्यूसन्पण्डितोऽनुमिमीते । तस्मात्काव्यारम्भोऽपि षष्ठशतकमध्यभाग एवेति स्पष्टमवधारयामासुः । एषः च वादः "पुनरुज्जीवनसिद्धान्तः" (Renaissancetheory)

इति प्रसिद्धः पाश्चात्यानामनुमतिमप्यर्जयामास । तथा च काव्यकालः कथं प्राचीनतरो भवतीति शङ्कोदेति । परन्तु वादोऽयमपविद्धः प्रमाणरहितश्चेति पश्चात् पाश्चात्या एव प्रत्यपादयन् । तेषां वादसरणिरेषा प्रामाणिक्येव ।

अत्र शकानामभियोगस्तावत् काव्यनिर्माणं नैव प्रतिबबन्ध । विशाले भारतदेशे पञ्चमभागमात्रेऽवासाधिकारः शकाः प्राधान्येन 'पंजाब्, सिन्धु, गुजराथ्, राजपुताना' इत्येषु देशेषु स्वयं प्रतितस्थुः । गृहनिर्माणादिकमादृत्य जीविकामतिवाहयन्तः प्रतिष्ठामलभन्त । तस्माद्भारते स्थलान्तरेषु काव्यरचनायां किमपि बाधकं नावर्तत । शकादयः परकीया अपि शीघ्रमेव भारतीयां संस्कृतिमङ्गीकृत्य हिन्दूधर्ममेव स्वीचक्रुः । रुद्रदामा, ऋषभदत्तः इत्यादीनि नामान्यमीषां हिन्दूरीतिमनुसरन्ति भारतीयायास्संस्कृतेरंगीकारं सूचयन्ति । कनिष्कोऽपि, यः ७८ क्रि० श० वर्षे राज्यभारमतनोदिति निर्णीतम्, बौद्धमताभिमान्यासीत् । एतादृशस्यापि नृपतेराश्रये देशीया (National) ललितकला नितरामभिवृद्धिमभजन्त । एवं परधर्मसहिष्णुताया भारतीयप्रकृतिसिद्धत्वात् ऋषभदत्तादयो विदेशीया अपि सद्यस्संस्कृतिमास्माकीमङ्गीकृत्य हिन्दूधर्ममनुप्राविशन् । एवमेतेषां सांस्कृतिकमैकमत्यं यदा सम्बभूव, तदा तादृश्यामप्यवस्थायां ग्रन्थरचनायाः कीदृशः प्रतिरोधो भवितुमर्हति ? तस्मात्परेषामुपद्रवात् काव्यनिर्माणकार्यं व्यच्छिद्यतेति वादो निर्मूल एवेति विमर्शकानामभिप्रायः ।

फर्ग्यूसन्पण्डितस्य वादोऽपि शिथिलमूलः सम्भावनापदवीमपि न भजते । फीट्नामको विमर्शकः, "क्रि० पू० ५७ तमवर्षे एवोपक्रान्तोऽयं विक्रमशकः । पञ्चमशतकेऽपिमालवशक इति नाम्नाऽस्य व्यवहारो दृश्यते । परिचितश्चायमशेषाणां भारतीयानां क्रि० श० ८०० तमवर्षे विक्रमशकनाम्ना प्रख्यातिं लेभे" इति संशोधनान्तरं विषयमिममुपन्यास्थत् । विनैव कारणं विक्रमादित्यः ६०० वर्षेभ्यः प्राचीनं कालमुपादाय वर्षसंख्यामजीगणदित्यपि न युक्तिभिरनुगृहीतं मतम् । एकस्माद्वर्षशतकात्प्रागेव गुप्तवंशीयैर्नृपतिभिः शकानां निर्वासनात् तेषां विजेता षष्ठशतकस्थो विक्रमादित्य इति कथनमप्यनुचितमेव । वस्तुतः षष्ठशतके हूणा नाम विदेशीया आक्रमणकारिणः पराजिताः पश्चिमभारतान्निष्कासिता इति चैतिहासिकाः संगिरन्ते । हूणानां विजेता च 'यशोधर्मा विष्णुवर्धनो' नाम कश्चिदन्यो नरपतिर्न पुनर्विक्रमादित्य इति कथमसौ वादस्सम्प्रतिपन्नो भविष्यति? तस्मात् काव्यानामुत्पत्तिकालः क्रि० श० प्रारम्भ एवेति सिद्धमेभिः प्रमाणैः । [क्रमशः



# श्री वासुदेव द्विवेदी शास्त्री

## सार्वभौम संस्कृत प्रचार कार्यालय, वाराणसी

दुर्दिनेषु वीरोऽपि वराको भवति,
कुदेशेषु कोकिलोऽपि काको भवति ।
योगिनो वनाय स्पृहयन्ति,
भोगिनो धनाय स्पृहयन्ति ।

सुजना गुणमेव गवेषयन्ति,
दुर्जना दोषमेव अन्वेषयन्ति ।

भार्या एव गृहस्य प्रधानमुपकरणम्,
बाल एव गृहस्य प्रधानमलङ्करणम् ।

समूहे अनिष्टा अपि आचाराः पालनीया भवन्ति,
विपत्तौ विरुद्धा अपि लोका लालनीया भवन्ति ।
सद्विचार एव मनुष्यतायाः सारः,
सद्व्यवहार एव संसारस्य आधारः ।

# पत्रपत्रिकाप्रकाशनेऽनवधानम्

□ गोविन्द पाण्डेय :

अत्रभवतां पाणिनीयपारावारपारदृश्वनां साहित्यसमुद्रमन्थनसमुद्भूताममृतास्वादरसज्ञानाँ पत्रपत्रिकासु स्खलितिगारल्यं पीयूषवत्परिवर्त्तयितुकामानां स्तुत्येनप्रयत्नेन संस्कृतप्रकाशनानि स्खलितिरहितानि स्युरिति कामयामहे। मन्यामहे किन्तु नैषा स्वस्था परम्परा। एकतस्तु संस्कृतज्ञाः लिखन्त्येव नहि। एवं शरसन्धानेन तु सम्भाव्यतेऽधिकांशा लेखकाः लेख कर्मतएव विरक्ताः सन्तः विरंस्यन्त्येव।

मान्यान् सम्पादकान् लेखकांश्च विशेषतः जागरूकान् समीहमानाः क्षमायाचनपुरःसरं विरमामः। [सं०

यद्यपि अधुनातन्यः संस्कृतपत्रपत्रिका बाहुल्येन प्रकाश्यन्ते शुभलक्षणमेवेदम्; परञ्चैतासां प्रकाशने लेखकानां सम्पादकानाञ्च यथा समुत्साहो दृश्यते तथा वाक्यानां समुचितोपन्यासे भाषायाः परिष्कारे शुद्धौ च नावलोक्यते। सरलताव्याजेन मूल एवाघातः क्रियते, येन चानवस्थापातात् संस्कृतमसंस्कृतं भवति। क्वचन हिन्द्याः संस्कारादपि विकृतं जायते तत्। अतः काश्चन तादृशीअपि पत्रपत्रिका दिङ्मात्रमुदाहृत्य सानुनयमनुरुन्धे यदत्रत्यं शैथिल्यमपाकृत्य विद्वद्भिः दत्तावधानैस्तैर्भाव्यम्—

**संस्कृतप्रचारकम्—**

देहलीतः प्रकाश्यमानस्य "संस्कृतप्रचारकम्" पत्रस्य १९७७ वर्षीयदिसम्बरमासिकाङ्को द्रष्टव्यस्तत्र 'संस्कृताध्यापकेभ्यः प्राध्यापकेभ्यश्च निवेदनम्" इति शीर्षकलेखस्य प्रथमे प्रघट्टके "अनेका उपाया" "विषयानां दासान् कृत्वा" "अद्यः प्रतीयन्ते" इति स्थलेषु क्रमशः उपायशब्दस्य पुंवाचकत्वात् तद्विशेषणीभूतस्य अनेकशब्दस्य प्रथमाया बहुवचने 'अनेका' इति कथम्, अट्कुप्वाङिति सूत्रस्य जागरूकत्वात् 'विषयानां' घटकनकारस्य णत्वाभावस्तथा 'अद्य' इत्यस्याव्ययत्वात् विसर्गान्तः 'अद्यः' इति कथं स्यात्।

प्रूफसंशोधनाभावादपि मन्ये कुत्रचनाशुद्धयो भवन्ति किन्तु किं तत्रावधानं नापेक्ष्यते। एवमेतस्यपत्रस्यापरस्मिन् "अधुनिपाठ्यक्रमे संस्कृतस्य स्थानम्" इति शीर्षके लेखे प्रथमे प्रघट्टके "सक्षमा ···· भाषा" इति प्राप्यते तत्र 'क्षमा' इति प्रयोक्तव्ये 'सक्षमा' पदस्य प्रयोगः, "ग्रन्थाः प्राप्यन्त इति वक्तव्ये "ग्रन्थाः प्राप्नुवन्ति" इति किं सहृदयहृदयं न तुदति?

द्वितीये प्रघट्टके "भावछन्दः अलङ्कारशैलीव्याकरणस्य" इत्यत्र भावपदोत्तरतुगभावस्तथा समासघटकत्वात् 'छन्दोअलङ्कारयोः समासे संहिता" नित्येति नियमस्य सत्वात् विसन्धित्वं किं व्याकरणनियमान् नातिक्रामति?

तृतीये प्रघट्टके "व्यामोहः" इति स्थाने "व्यामोहत्वम्" 'वयं एतस्मिन्' इत्यत्र हल्परकत्वाभावात् "मोऽनुस्वारः" इत्यस्य सूत्रस्य प्रवर्तनञ्च लेखकस्य व्याकरणनियमपालने शैथिल्यं प्रकटयति।

चतुर्थेऽनुच्छेदे 'अद्यतनीषु' पदे प्रयोक्तव्ये 'अद्यतनीयासु' प्रयोगः, पञ्चमे "राष्ट्रभाषा आंग्लभाषाणाम्" इत्यत्र समस्तपदत्वात् सन्धिराहित्यं षष्ठे च 'प्रेमिभिः" इत्यत्र प्रेमशब्दस्य अदन्तत्वाभावात् प्रयुक्त इनिप्रत्ययश्चावधानवैर्यमभिव्यनक्ति।

**"गैर्वाणी"—**

आन्ध्रप्रदेशात् प्रकाश्यमानाया "गैर्वाणी" पत्रिकाया अक्टूबर (१९७७) मासिकेङ्के सम्पादकीयलेखस्य द्वितीयेऽनुच्छेदे 'यावान् कार्यान्वयक्षेत्रस्य सम्बन्धः भाद्रपदमासीया घटनाः न तस्य सर्वतोभद्रतां सूचयति" इति वाक्यगतं क्रियापदं केन कर्तृपदेन अन्वेति तथा "भाद्रपदमासीया घटनाः" इत्यस्यान्वयः कुत्रकर्त्तव्यः इति जिज्ञास्यमेवास्ते।

तृतीयेऽनुच्छेदे 'लोकसभानिर्वचने' "बन्धमोक्ष संप्राप्तौ" इति स्थलद्वयं प्रूफसंशोधनाभावं सूचयति।

चतुर्थेऽनुच्छेदे "स्मृतीनां इतिहासपुराणानाम्" इत्यत्र स्मृतीनां पदगतानुस्वारोऽच्परकत्वात् स्वीयां सत्तां कथं जीव-

यितुं प्रभवेत् ? एतस्या एव पत्रिकाया नवमे पृष्ठे 'विनायकमहोत्सव" नामके लेखे तृतीये प्रघट्टके "विनायकउत्सव" इत्यत्रापि सन्धिराहित्यविप्रतिपत्तिर्जागारितैव । अग्रिमायां पङ्क्तौ "उपन्यसितवन्त" इत्यस्य पदस्य "उदितोवा" "यस्य विभाषा" सूत्रद्वयस्य सत्वात् कथं साधुत्वम् सम्पादयितुं शक्यते ।

एवं "बहुमतिगृहीतारः" इत्यत्र क्त्वाभावात् "ग्रहीतारः"इति प्रयोक्तव्ये "गृहीतारः" इति कथम् ? समस्तेष्वपि पदेषु सन्धे राहित्यमनेकत्रैतस्यां पत्रिकायाम् लभ्यते ।

द्वादशे पृष्ठे "अन्तरङ्ग" स्थाने "आन्तङ्गिकपदमरुन्तुदमेव प्रतीयते । एवमत्रैव "स्व आवेगम् प्रकटयत्" 'प्रार्थयित्वा" इति चिन्त्यमेव ।

**दिव्यज्योतिः –**

प्रकाशिते सप्तसप्तत्युत्तरैकोनविंशे ख्रीष्टाब्दे नवम्बर मासिकेऽङ्के "दिव्यज्योतिषः" पत्रस्य सम्पादकीयस्य लेखस्य "संस्कृतसमस्यासमाधाने सामूहिकता परमावश्यका "इति शीर्षकघटक–'परमावश्यका' पदं सामूहिकतेत्यस्य विशेषणम् विद्यते तेन च स्त्रीत्वमुपगतं तत् ङीप्प्रत्ययमपेक्षते परं सा चापेक्षोपेक्षिता ।

एतस्यैव तृतीये पृष्ठे "कारावासे गीताध्ययनं मोक्षदम् शीर्षके लेखे तृतीयेऽनुच्छेदे "प्राप्तयशमः डा० भिडकायकरमहाभागाः" इत्यत्र मन्ये मुद्रणदोषात् "प्राप्तयशसः" इति अपेक्षितस्य पदस्य स्थाने "प्राप्तयशसमः" इति पदम् मुद्रितम् किन्तु किं चतुर्थेऽनुच्छेदे "असाधारणा सफलता' इत्यत्रापि 'असाधारणी' स्थाने 'असाधारणा' पदं मुद्रणग्रहग्रस्तं जातम् ? यदि मुद्रणेनापि दोषो भवति तदा सोऽपि त्याज्य एव ।

षष्ठे पृष्ठे "संस्कृतस्यपुनरावाह्नम्" लेखस्य प्रथमे प्रघट्टके 'मनोरञ्जनादिषु" इत्येतद्घटकादिपदस्य सापेक्षत्वात् कस्याप्यन्यस्योचितपदस्याभावात् साकांक्षत्वमेव प्रतिभाति । अत्रैव द्वितीयेऽनुच्छेदे "सम्मानम् ववृते" "देशतौ आरम्य" "आपणानि प्रापूरयन्तः" इति स्थलेषु प्रथमे तृतीये च क्लीबत्व द्वितीये च उत्वाप्तिः अनवधानपथमारोहतीति प्रतीयते । पत्रस्यास्यान्यत्रापि कतिषुचित् स्थलेषु अपाणिनीयत्वं लक्ष्यते जिज्ञासुभिस्तद् यथास्थलं द्रष्टव्यम् ।

**भारतोदय :—**

ज्वालापुरीयगुरुकुलमहाविद्यालयस्य "भारतोदय" नामकमुखपत्रस्य सप्तसप्तत्युत्तरैकोनविंशख्रीष्टब्दीयजुलाय्यगस्तसितम्बराक्टूबरमासिकेऽङ्के सम्पादकीयलेखस्य द्वितीये प्रघट्टके "तन्मूल्यानि प्रदानेन" इत्यत्र प्रयुक्तस्य 'मूल्यानि' पदस्यापेक्षितविभक्तेरभावादभिप्रेतार्थप्रदानाक्षमत्वं लक्ष्यते । एवमस्मिन्नेव लेखे पञ्चमे पृष्ठे पञ्चमानुच्छेदस्य प्रथमपङ्क्तौ "इदं आशास्यते स्म" वाक्यघटकस्य इदंपदस्यानुस्वारोच्चपरकत्वात् कथं स्थिरत्तां गच्छतीति न जाने ।

एकादशे पृष्ठे "संस्कृतसाहित्ये वेणीबन्धनम् । नाम्नि लेखे "इदं दर्पणं तावदित्यत्र पुंवाचकस्य दर्पणशब्दस्य विशेष्यत्वात् तद्विशेषणीभूतेदं शब्दस्य कर्मणि "इमम्" इत्येव भवितुमर्हति न त्विदम् । यदि समासघटकत्वं तस्य साध्येत तदा तथा भवितुमर्हेत् परं पृथक् पृथक् तयोः प्रयोगाल्लेखकस्य समासकरणे नास्ति संरम्भ इत्यनुमातुं पार्यते ।

द्वादशे पृष्ठे "वार्धक्यकालः" इति शीर्षकगतप्रथमपद्यस्यान्तिमे चरणे सम्पत् शब्दस्य आकारान्तत्वप्रतिपादनं दुःशकमेव । मुद्रणदोषस्त्वनेकत्र प्रतिभातीतितत्रापि सावहितितत्वमपेक्ष्यते ।

**सर्वगन्धा —**

लखनऊतः प्रकाश्यमानायाः प्रगतिशील संस्कृतमासिक्याः (१९७७ अक्टूबर नवम्बर) "सर्वगन्धायाः" मुखपृष्ठे मुद्रितायाः "ईदृश एष मुनाऊः" गीतिकायाः उपान्तचरणे "नारीनरौ" इत्यत्र द्वन्द्वसमासे "अजाद्यदन्तम्" सूत्रनियमात् नरस्य अदन्तत्वात् पूर्वप्रयोगोऽपेक्षितः किन्तु तन्नियमोलङ्घनात् गीतिकारस्य अपाणिनीयत्वम् द्योत्यते ।

सम्पादकीये "गन्धवहः" इति लेखे "जातिवाचकाः निरस्ता बिजातीयानां नामसु संयुक्ताः "इत्यत्र" जातिवाचकाः इत्यस्य साकांक्षत्वात् किमपि विशेष्यवाचकं पदमपेक्ष्यत एव । भवतु नाम अध्याहृत्य कथञ्चित् समाधातुं शक्यते परञ्चाग्रे "राजसेवकप्रभृतीन्" इति स्थले प्रयुक्तसमस्तपदघटक 'प्रभृति' शब्दस्तु कस्यापि विशेष्यवाचकपदस्य प्रयोगं बिना निराकांक्षो न भवति ।

एतस्यैव लेखस्य षष्ठेऽनुच्छेदे "तत्र आचार्या एव हेतुः" इति वाक्ये हेतोरेकवचनान्तत्वोपन्यासः "आचार्या" इत्यस्य बहुवचने उपन्यस्तस्य उद्देश्यस्यानुकूल्यं कथं याति, उद्देश्यविधेययोः समानवचनकत्वनियमादसत्यनुशासने । नात्राचार्याणां सम्मिलितहेतुत्वं विवक्षितम् । तृणारणिमणिन्यायेन प्रत्येकमाचर्यस्य पृथक् पृथक् हेतुत्वं राष्ट्रचारित्रपतनकारकत्वेन समीहितमस्ति ।

पञ्चमे पृष्ठे "अस्तव्यस्तपुराणम्" लेखे "मैकालेः घोषणा प्रायः तैः न पठिता" इत्यत्र मैकालेशब्दस्य "मैकालेः" इति षष्ठ्यन्तं रूपं कथङ्कारं सिद्ध्यतीति न जाने । 'मैकाले' शब्दं रूढं मत्वा "मैकालयः" इति तत्र प्रयोक्तव्यमथवा मैकाले महोदयस्य इति प्रयोक्तव्यम् ।

अष्टमे पृष्ठे 'जागृतिः" शीर्षक पदं 'जाग्रोऽविचिण्णल्ङित्सु" सूत्रस्य जागरूकत्वात् गुणाभावयुतं कथं स्यादिति दिक् ।

## सुप्रभातम्—

जम्मूतः १५।८।७७ दिनाङ्के प्रकाशितस्य "सुप्रभातम्" मासिकपत्रस्य सप्तमेऽङ्के चतुर्थपृष्ठस्य द्वितीयेऽनुच्छेदे "अद्यावधि पर्यन्तम्" इत्यत्र 'पर्यन्तम्' पदमनावश्यकं प्रतिभाति ।

षष्ठे पृष्ठे चतुर्थेऽनुच्छेदे "अन्यभाषासु सत्सु" इत्यत्र 'सत्सु' इत्यस्य स्थाने सतीषु अपेक्ष्यते भाषाया विशेषणत्वात् । सप्तमे पृष्ठे 'अद्यावधि यावत्' प्रयोगगतं यावत्पदमपि अनावश्यकमेव । अष्टमे पृष्ठे "सृजनकार्यं संभवति" इतिवाक्यघटकस्य 'सृजन' पदस्य "पुगन्तलघूपधस्य" च सूत्रस्य सत्वात् कथं साधुत्वं स्यात् ?।

"साप्ताहिके" "पाक्षिके" इति पदयोः सप्तम्यन्तत्वमपि अनभिप्रेतमेवएतस्यैव पृष्ठस्य द्वितीये प्रघट्टके "संस्कृताध्ययनाध्यापनाय" इत्यत्र द्वन्द्वघटकीभूतयोः अध्ययनाध्यापनयोरेकवद्भावोऽपि चिन्त्य एवाननुशासनात् ।

## संस्कृतसम्मेलनम्—

पटनातः प्रकाश्यमानस्य 'संस्कृतसम्मेलनम्" त्रैमासिकमुखपत्रस्य अक्टूबरमासिकेऽङ्के (१९७७) 'संस्कृतसेविपरिचयः' नाम्नि लेखे "विद्व-तल्लजानाम्" इत्यत्र प्रशंसावाचिना मतल्लजशब्दस्य "प्रशंसावचनैश्च" सूत्रद्वारा जाति वाचकपदेनैव सह समासाभिधानात् विद्वच्छब्दस्य जातिवाचकत्वाभावात् समासविधिरत्रत्योऽपाणिनीयत्वमुद्घोषयति । एतस्मिन्नेव लेखे पञ्चमे पृष्ठे तृतीयेऽनुच्छेदे "मेधाविछात्रैः" "तीव्र बुद्धि छात्राणाम्" इति समस्तपदप्रयोगयोः "छे च" इति सूत्रस्य सत्वात् तुगभावोऽपि लेखकानवधानम् प्रकटयति । एतस्यैव पृष्ठस्य चतुर्थेऽनुच्छेदे 'श्रमतक्भाषणेन इत्येतद्घटक 'श्रमतक पदमपि असाधुत्वं प्रतिपादयत्यात्मनः 'ठक्' प्रत्ययविधायकानुशासनाभावात् ।

षष्ठे पृष्ठे किमिति विचित्रम्" शीर्षकस्य छन्दोविहीनकवित्वस्य प्रथमपङ्क्तौ "दिग्भ्रमितः" प्रयोगोऽपि असाधुतां व्यनक्ति 'यस्य विभाषेति सूत्रबलात् ।

षोडशे पृष्ठे सम्पादकीये लेखं तृतीयेऽनुच्छेदे 'वाङ्मय द्विधा प्रयुक्तमस्ति तत्र गकारस्य सन्निवेश उद्वेजयति ।

अन्तिमेऽनुच्छेदे "स तु तत्र विशेषदुर्लभः इति श्लोकस्य भवभूतिकर्तृकत्वं निर्दिशतः सम्पादकस्य अनवधानं लक्ष्यते ।

## स्वरमङ्गला—

उदयपुरतः प्रकाशितायाः "स्वरमङ्गला" त्रैमासिक पत्रिकायाः १९७७ वर्षीयाप्रैल-जून मासिकेऽङ्के सम्पादकीये

लेखे "स्वरचिताप्रतिमसरसप्राञ्जलगद्येन" इति पङ्क्तिगत-प्राञ्जल' शब्दो हिन्द्याः प्रभावं दर्शयति। अग्रिमायां "शृङ्गा-रललितलीलाभङ्गि;मायाः" इति पङ्क्तौ दृश्यमानं भङ्गिमायाः "पदम् असाधुत्वपराहतं प्रतिभाति इमनिच्प्रत्ययान्तानां शब्दानां पुंस्त्वानुशासनात्।

अस्यैव लेखस्य द्वितियेऽनुच्छेदे "वीरुधाश्च" कोषादि-प्रामाण्यात् अदन्तत्वाभावात् तथा "लेखमाकांक्षते" इत्यत्र 'आकांक्षते' क्रियापदस्य परस्मैपदित्वाभावो व्याकरणानुसारित्वं न प्रकटयति।

अन्येऽपि केचन मुद्रणादिदोषाः यत्र तत्र दृश्यन्तेऽतोऽवधानं सर्वथापेक्ष्यते। अन्यासां पत्रिकाणामपि भाषाया अशुद्धिविषयम् अग्रिमेऽङ्के सूचयितास्मि। एतत्सर्वं जिज्ञासुधिया दर्शितम्। यद्यत्र काचन भ्रान्तिमदोया संलक्ष्येत तदावश्यं सूचनीयोऽयं जन इति निवेदनम्।

सार्वभौम संस्कृत प्रचार कार्यालय
डी० ३८/११०, हौजकटोरा, वाराणसी।

# उपनिषत्काव्ये-ईशावास्यम्

रचयिता—डी० शेषगिरिशर्मा

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

ईशावास्यसुधास्वाद्यमकरन्दमहीयसी।
कृतिः शेषगिरेश्चित्रा ह्यनुमन्त्रं प्रकाश्यते॥ (सं०

ॐ शान्तिः! शान्तिः!! शान्ति!!!

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥ १॥

यदिदं भुवनेषु दृश्यते, निखिलं स्वात्मतया विभावय।
त्यज भूतिषु नित्यताधियं, न च काङ्क्षस्व मृषा धनादिकम्॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २॥

शतवत्सरजीवितं नरो, विहितं कर्म निरीहया चरेत्।
अमुनैव पथाचरन् कदाप्यशुभं कर्मफलं न विन्दते॥

असूर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥

प्रविशन्ति तमोवृता जना, न विदन्त्यात्मयथार्थतां हि ये।
जनिमृत्युपरम्परास्पदां जगतीं ते भृशमात्मघातुकाः॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति॥ ४॥

अचलं भवदात्मतत्त्वमप्यतिवेगात् मनसोऽतिरिच्यते।
करणानि विदुर्न तत्प्रभोर्मनसो वेगतरं निगद्यते॥
अनिधाय पदात्पदं स्वयं पुरतो धावति धावतां नृणाम्।
भुवि विष्णुपदे जले तले निबिडत्वात् परिदृश्यते यथा॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥ ५॥

स चलत्यथ निश्चलोऽपि सन् बहुदूरोऽपि समीपमृच्छति।
निखिलेष्वपि दृश्यतेऽन्तरा बहिरप्यस्ति स विश्वसंवृतः॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ ६॥

स किलात्मनि तृप्तिमाप्नुते, य उ भूतानि विलोकते, स्वयम्।
निखिलेषु वसन्तमीक्षते, स हि साक्षात् परतत्त्वरूपभाक्॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः॥ ७॥

भूतानि सर्वाणि यदात्मरूपं भजन्त्यभिन्नत्वकृतो जनस्य।
शोकः क्व, मोहः क्व च सम्भवेतामेकात्मरूपं परिपश्यतो मे॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छा-
श्वतीभ्यः समाभ्यः॥ ८॥

आकाशवद्व्यापक एष आत्मा स्थूलं च सूक्ष्मं च कारणं वा।
देहं वहेत्, सर्वदृगन्तरात्मा, सर्वज्ञ ईशः परिभूः स्वयम्भूः॥
स नित्यमुक्तो व्यदधात् पदार्थान् यथार्थतः कर्मफलानुरूपम्।
विभज्य संवत्सरनामकेभ्यः प्रजापतिभ्यस्स ददौ विधातुम्॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥ ९ ॥

न केवलात्कर्मण एव सिद्धिर्न चाप्युपास्तेः किल कर्मशून्यात् ।
पृथक्-पृथक् शीलनतत्परा ये विशन्ति तेऽन्धंतम आत्मदूराः ॥

अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

उपासनायाः फलमन्यदेव तत्कर्मणोऽप्यन्यदिति ब्रुवन्ति ।
उपास्तिगम्यः किल देवलोकः कर्मप्रपद्यः पितृदेवलोकः ॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ ११ ॥

यः कर्म चोपासनमेककर्त्तृं स्मरन्नुभे आचरति स्वशक्त्या ।
स कर्मणः प्राक्तनकर्म तीर्त्वा लभेत देवत्वमुपासनातः ॥

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥ १२ ॥

अव्याकृतोपासनमेकमेवं हैरण्यगर्भाख्यमुपासनं ये ।
पृथक्तया कुर्युरहो तमिस्रे पतन्ति ते स्वात्मचितेस्सुदूरे ॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥
संम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥

हिरण्यगर्भाख्यमुपासनं यः करोति सिद्धीरणिमादिकाख्याः ।
लभेत, येऽव्यक्तमुपासते ते लयं प्रकृत्याः प्रभवन्ति कर्त्तुम् ॥
अतएव समुच्चितं द्वयं विधिवद्यो विदधाति यत्नतः ।
अणिमादिकमाप्य साधकः प्रकृतेर्नाशमथाप्नुते ध्रुवम् ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

आदित्यमण्डलविलीनपरात्परस्य,
द्वारं किलास्य पिहितं रुचिमण्डलेन ।

हे सूर्यदेव ! कृपया कुरु निर्निरोधं,'
सत्यस्वरूपकलनाय नराय मह्यम् ॥

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ-
पुरुषः सोऽहमस्मि ॥ १६ ॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ॐ क्रतो स्मर, कृतं स्मर, क्रतो स्मर कृतं स्मर ॥ १७ ॥

सकलस्य चराचरस्यनाथ-त्वमु गृह्णास्यखिलानसूत्रसाँश्च ।
मम भास्कर तापहेतुकान्ति प्रतिसंहृत्य निदर्शयात्मरूपम् ॥
संयुञ्जन्त्ववसानकालगलिताः प्राणाश्शरीरान्मितात्,
सूत्रात्मन्यखिलस्वरूपिणि, तनुर्भस्मीभवत्वग्निना ।
ओङ्काराभिध, वह्निरूप जनसङ्कल्पस्वरूपस्मरेः,
भूयोऽपि स्मर मां, मदीयमननं भूयोऽपि तुभ्यं नमः ॥

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्ति विधेम ॥ १८ ॥

नय सत्यपथेऽनिवर्त्तने भवकर्मप्रकृतिज्ञ पावन !
अवगच्छसि वञ्चनात्मकं ममकर्मेति भवन्तमाश्रये ॥
ईशावास्यार्थ सशोभि काव्यं शेषगिरीरितम् ।
दृष्ट्वा प्राज्ञाः प्रसीदन्तु धन्यतां प्रापयन्तु तम् ॥

**श्रीमदीशावास्योपनिषत्काव्यं शुभं भूयात् ।**

# रूपादिमधु सेव्यते

नेत्रादिजालकोपान्ते हृत्पद्मासनलीलया ।
वारं वारं त्वया देवि ! रूपादि मधु सेव्यते ॥

अविनाशिनि मङ्गलप्रदीपे मनसि प्रज्वलिते महाप्रकाशे ।
बर्हिरिन्द्रियगोलकैर्गवाक्षै रविशेषादवभास्यते त्रिलोकी ॥ [ म० मञ्जरी ]



# श्रीवाराणसेयसंस्कृतवाग्वर्द्धिनी सभा

कार्त्तिकशुक्लाष्टम्यांमीरघट्टस्थ श्री उदासीन सं० म० विद्यालये संस्कृत विकाशार्थं प्रचलन्त्याः संस्कृतवाग्वर्द्धिन्याः सभायाः संस्कृतमय पाक्षिकमधिवेशनं जातम्। तत्र श्रीदाउजी सं० म० विद्यालयप्रधानाचार्याणां श्री शशिधर मिश्राणामाध्यक्ष्ये श्रीरामानुजविद्यालयीयस्य श्रीकमलनयनाचार्यस्य सञ्चालकत्वे च कार्यक्रमः सञ्चालितः।

सभेयं वाराणस्यां वर्षद्वयात् प्रत्यष्टमि द्वादशवादनतो दिने भवति। स्थानं, सभापतिः सञ्चालकौ विषयाश्च शास्त्रार्थभाषणयोः पश्चात् प्रतिसभं परिवर्त्तन्ते। आयोज्यते चेयं प्रारंभादेवसंस्कृतमात्रभाषिणा भारतीय-संस्कृत-संस्कृति-संरक्षण दृढव्रतिना ब्रह्मचरता श्रीमद्गायत्रीनन्दनेन। सर्वसंस्कृतविद्यालयेभ्यः छात्राः केचन प्राध्यापकाश्चायान्ति। सर्वमान्यो विद्वत्तमः सभापतित्वं भजते। क्रमस्तु सर्वदा छात्रकर्तृकं वैदिकपौराणिकमङ्गलाचरणम् (१) सभापति-प्रस्ताव-समर्थन-अनुमोदन-माल्यार्पणानि (२) पाणिनीयसूत्रान्त्याक्षरी (३) सुललितसंस्कृतपद्यान्त्याक्षरी (४) संस्कृत-संस्कृतिविषयकं भाषणम् (५) पूर्वनिम्नकक्षामारम्य छात्राणाम्, ततोविदुषाम् न्यायव्याकरणादिविषयेषु छात्रकर्तृकोऽध्यापकनियन्त्रितः शास्त्रार्थविचारः इत्येवं प्रचलति। सभाप्रविष्टैः सर्वैरपि संस्कृत एव व्यवहर्त्तव्यमिति सभाया अस्याः प्राथमिको नियमः। विषयस्य स्थानस्य च सूचना सति संभवे वृत्तान्तपत्रादिना प्रसार्यते, अन्यथा संस्कृतानुरागिभिःस्वयमेव अन्विष्यागन्तव्यम्। सभयानया सर्वैर्लाभान्वितैर्भवितव्यम्। अत्र नास्ति कार्यकारिणी स्थायी समितिः। ये सभायामुपस्थितास्ते सर्वेऽपि कार्यकारिणः सदस्याश्चः। एतत्सञ्चालनाय पणकमेकमपि न याचितव्यमिति स्पष्टः प्रतिबन्धः। प्रतिसभं लघु माल्यमेकमध्यक्षार्थमावश्यकं तत्तु केनापि सहृदयेन समानेतुं शक्यम्। तदपि अहमग्रिमायां सभायां माल्यमानेष्यामीति सूचयित्वैवानेतव्यम्। एतत्सर्वं सर्वेषां ज्ञापनाय लिख्यते। अस्तु—

इदानीं संक्षिप्य प्रकृताधिवेशनसारांशः प्रस्तूयते। हरिप्रपन्नशशिकान्ताभ्यां पूर्वोत्तरपक्षक्रमेण न्याये "मङ्गलवादः" इति विषये शास्त्रार्थचर्चा विधाय विद्वांसस्तोषिताः संस्कृतमहत्वमिति विषये सुरेन्द्रद्विवेदी, राममूर्तिचतुर्वेदी सत्यनारायण त्रिपाठिप्रभृतिच्छात्राणाम् श्रीपुरुषोत्तमत्रिपाठि-रामयज्ञशुक्ल-कमलनयनाचार्यादिविदुषांश्च प्रवचनमभूत्। अन्ते सभापतिभाषणम्। सर्वान्ते संयोजकब्रह्मचारिद्वारा कृतज्ञता-ज्ञापनमभूत्। मंगलाचरणपूर्विका समाप्तिश्च जाता। श्रीउदासीन सं० म० विद्यालयप्रधानाचार्यैर्विद्वद्वरैः स्वभाषणे संस्कृताध्ययनेन जीवनं सरसं शान्तिमयं चभवति, "वसुधैव कुटुम्बकम्" इतिभावनात्रैव। शासनद्वारा संस्कृतस्य आदरातिशयो लभ्यः, तदभावादेवेदानीं संस्कृतं सर्वेभ्यो न रोचते। पूर्वं राष्ट्रभाषात्वं लोकभाषात्वञ्चानेन प्राप्तम्। तथासत्येवेदानीमपि विकाशः स्यात्। संस्कारे भूषणे चार्थे समुपसर्गोस्ति। तत्र भूषणार्थत्वं संपदस्योपयुज्यते, प्रथमार्थत्वेतु समाहितसंस्कारता समापद्येत, नहि तया वस्तुस्थितिरिति प्रतिपादितम्। अध्यक्षैश्च संस्कृतद्वारा पुरुषार्थचतुष्टयलाभ इतरभाषयाचैकपुरुषार्थमात्रलाभ इत्यादिकं सुललितमभिधाय सर्वे शुभाशीर्भिः संयोजिताः।

—प्रेषकः सभासंचालक-कमलनयनाचार्यः

★

# कर्ममीमांसादर्शनम् : क्रियापादः

आविष्कर्त्ता तथा भाष्यकारः

भगवत्पूज्यपादमहर्षियोगिराजस्वामिज्ञानानन्दमहाराजप्रभुः

वा व्यक्तिविशेषस्य देहाध्यासशून्यस्य शरीरे चन्दनलिप्तेऽपि चन्दनभोगसमाप्तिर्न जायते, तथा च केवलेन मनसैव कृत पानीयपाने तृषितव्यक्तितृषाविकलता न प्रणश्यति, तद्वदेव भोगनिष्पत्तिसिद्धये शरीरान्तःकरणयोरुभयोरेवावश्यकत्वम्। भोगरीतिरपि द्विप्रकारैव सिद्धा ॥ २२० ।

प्रसङ्गादुच्यते —

त्रयागुणभावा धर्मकर्मवैचित्र्ये निदानम् ॥२२१॥

त्रयोगुणास्त्रयोभावाश्च धर्मकर्मवैचित्र्ये कारणम्। सत्त्वं रजस्तमश्चेति त्रयो गुणाः प्रकृतेः पुरुषस्य चाध्यात्माधिदैवाधिभूतस्वरूपास्त्रयो भावाः स्वाभाविकाः। अत एव सर्वे पदार्था निखिलावृत्तयश्च त्रिगुणैस्त्रिभावश्च सम्बन्धनिबद्धाः। सर्गस्य प्रत्येकमप्यङ्गप्रत्यङ्गं स्वभावत एव त्रिगुणत्रिभाववशेन स्वरूप पार्थक्यं धत्ते। न कोऽप्येतादृशा विषया यस्य सम्बन्धस्त्रिगुणै स्त्रिभावैर्वा न स्यात्। अतो जड़चेतनधारको धर्मो जडायां चिन्मय्यां च प्रकृतावनुस्यूतस्वरूपः, सृष्टिस्थितिलयकारणस्वरूपं कर्म च, द्वाविमौ त्रिगुणत्रिभावसम्बन्धतो न भवितुमर्हतः पृथगभूतौ। सुतरां त्रयाणां भावानां च घातप्रतिघाताभ्यां धर्मस्य कर्मणश्च स्वरूपमनन्तवचित्र्यपरिपूर्णं भवितुमर्हतीत्यत्र नास्ति कश्चनापि सन्देहलेशः। उदाह्रियतेऽत्र यद् भोजनमेकं कर्म, तच्च द्रव्यशुद्धिविचारेण क्रियमाणं सात्त्विकम्, स्वादविचारतो राजसिकम्, विचारशून्यमनर्गलं च तामसिकम्। एवमेव यज्ञशेषभोजनमध्यात्मशुद्धिपदम्, साम्प्रदायिकविचारेण स्वेष्टदेवताप्रसन्नतासम्पादकमधिदैवशुद्धिप्रदम्, केवलं शरीरनैरोग्यविचारेण क्रियमाणमधिभूतशुद्धिसम्पादकं मन्यते, तथैव दानमप्येकं धर्माङ्गम्। ततश्च केवलं कर्त्तव्यबुद्धया दीयमानं सात्त्विकम्, फलावाप्तिकामेन दीयमानं राजसिकम्, अविचारपूर्वकमनर्गलरीत्या दीयमानं तामसिकं गीयते। तथा च तदैव दानं जगद्ब्रह्मस्वरूपमवधार्य क्रियमाणमध्यात्मशुद्धिकारकम्, स्वदेशस्वजातिस्वेष्टदेवस्वपितृनिमित्तकमधिदैवशुद्धिसम्पादकम् यच्च। केवलं स्वशरीरमेव लक्ष्यीकृत्य क्रियते तदधिभूतशुद्धिप्रदमुच्यते। एवं हि त्रिगुणत्रिभावानां परस्परसम्मिलितघातप्रतिघाताभ्यां धर्मः कर्म च विविधानि स्वरूपवैचित्र्याणि धारयतः॥२२१॥

अन्यदपि—

त्रिभावस्य युगपत्कार्यकारित्वं चापि ॥२२२।

त्रिभावस्य युगपदेव कार्यकारिता चापि विज्ञेया। शारीरिकं मानसिकं बौद्धिकं चेति कर्म भावत्रयविभक्तम्। शारीरिके वाचनिकादीनि, मानसिके संकल्पादीनि, बौद्धिके च ज्ञानविचारादीनि कर्माण्यन्तर्भवन्ति। सर्वाण्यपि कर्माणि श्रेणित्रयविभक्तानि। एकतो द्वितीयश्रेणिगं द्वितीयतश्च तृतीयश्रेणिगं कर्म क्रमशः सूक्ष्मतरं सूक्ष्मतमञ्च। अत एकस्मिन्नेव काले त्रयाणामपि पृथक्-पृथकक्रिया प्राकट्यमेति। जगद्धिताय मनुष्येण क्रियमाणं दानं शारीरिकं कर्म, तदर्थं दानसंकल्पो मानसिकं कर्म, जगतः कल्याणाय दानोपायनिर्धारणं बौद्धिकं कर्म प्रोच्यते, परन्तु एकतो द्वितीयं, ततश्च तृतीयं दानकर्म सूक्ष्मताराज्यसम्बन्धहेतुना त्रिविधमपि तत् एककालावच्छेदेनापि भवितुमर्हति। एतदुदाहृतिरवधेया-तथाहि ब्राह्मणेभ्यो भोजनदानमाधिभौतिको यज्ञः, यज्ञकर्त्ता उत्तमोत्तमं पदार्थमादाय ब्राह्मणान् भोजयति, तत्तत्पदार्थसंग्रहः सदाचारपुरस्सरं ब्राह्मणभोजनं शारीरिकं कर्म। तत्र शीलसदा-

चारादीनां धनव्ययस्य च प्रयोजनीयता । उत्तमया योजनया ब्राह्मणभोजनस्वरूप आधिभौतिको यज्ञः सुसम्पद्यते । परन्तु तस्मिन्नेवावसरे यज्ञानुष्ठातरि मानसिकं बौद्धिकं कर्माऽपि समुत्पत्तुमर्हति । ब्राह्मणानां बाह्यचेष्टासु प्रतिकूलमनुकूलं वा लक्ष्यसंस्थापनं मानसिकं कर्म, तथैव तत्र पात्रापात्रविचारो बौद्धिकं कर्म । त्रीण्यप्येतानि कर्माणि युगपदपि भवितुमर्हन्ति यज्ञफलं सद्गुणितं त्रिगुणितं वा कर्त्तॄं प्रभवन्ति ॥२२२॥

प्रसङ्गतः फलोत्पत्तिमूलमभिधीयते—

वासनैव फलोत्पत्तौ मूलम् ॥२२३॥

फलस्योत्पत्तौ वासनैव मूलं कारणमवगन्तव्यम् । तामसिकं राजसिकं, सात्त्विकं वा अध्यात्माधिदैवमधिभूतं वा, शारीरिकं मानसिकं बौद्धिकं वा कर्म; सर्वत्रैव सर्वावस्थाया वासनायाः संग्रहस्यावसरे सम्पद्यमाने सति, तथैव वासनाया संस्कारस्तेन च कर्म ततश्च कर्मफलमुत्पद्यते । केवलया वासनयैव न फलोत्पत्तिस्तथैव वासनारहितेन कर्मणाऽपि नैव फलमुत्पादयितुं शक्यते । अतएव कारणाज्जीवनमुक्तो महापुरुषः वासनरहितः कर्म कुर्वन्नपि कर्मबन्धनविमुक्तस्तिष्ठति । अतो वासनयैव कर्मफलोत्पत्तिरिति निश्चप्रचम् । यथा किल धान्यवृक्षाणां संगृहीतेषु धान्यबीजेषु नष्टेषु सत्सु धान्यजातिः प्रणश्यति । किन्तु धान्यबीजैः सुरक्षितैः धान्यवृक्षाणां समुत्पत्तिस्ततश्च फललाभोऽवश्यम्भावी, तथैव वासनाप्रभावादेव फलोत्पत्तिर्नान्यथा । विद्यमानायां वासनायां कर्म फलोत्पत्तिरवश्यमेव बोभूयते ॥२२३॥

अन्यच्च —

क्रियाप्रतिक्रियायां नूनं भावित्वम् ॥२२४॥

क्रियायाः प्रतिक्रियाऽपि नूनं भाविनि । प्राकृतिकेन स्पन्दनेन क्रियोत्पत्तिः तच्च त्रिगुणस्वाभाविकतरङ्गतः समुत्पद्यते अतः प्रत्येकस्याः क्रियायाः प्रतिक्रिययाऽपि नूनमेव भवितव्यम् । यथा किल तडागस्य जलतरङ्गस्तडागतटमासाद्य स्वाभवत एव पुनर्निवर्त्तन्ते, तथैव प्रत्येकस्यास्त्रिगुणजनितायाः क्रियायाः समाप्तौ तत्प्रतिक्रियोत्पत्तरपि स्वाभाविकी । अन्यच्च सर्वेषां दृश्यपदार्थानां देशकालपरिच्छिन्नत्वात् तरङ्गाणां निवर्त्तनं सर्वदैव बोभूयमानमास्ते । कर्मस्वरूपिण्य उर्मिमाला व्यक्तिगतदेशकालरूपतटमासाद्य पुनर्निवर्त्तन्त एव । अयमेव क्रियातः प्रतिक्रियाया अवश्यम्भावी मौलिको राद्धान्तः ॥२२४॥

प्रसङ्गतः फलोत्पत्तिप्रकारः समुपवर्ण्यते—

शरीरशक्तिप्रवृत्तिजात्यायुर्भोगाः प्रारब्धजन्याः ॥२२५॥

शरीरं, शक्तिः प्रकृतिः प्रवृत्तिः जातिरायुर्भोगश्च प्रारब्धजन्या विज्ञेयाः । कर्मफलोत्पत्तिसमये यदा प्रारब्धमुत्पद्यते, तदानीं तेन प्रारब्धेन स्थूलं शरीरम्, स्थूलाः सूक्ष्माश्च शक्तयः, ब्राह्मणादय आर्यानार्याश्च जातयः, आयुः कालः, भोगस्य च विषयाः प्रकृतिः, प्रवृत्तिश्चेत्यादि जीवः प्राप्नोति । संस्कारस्वरूपबीजतो वासनासाहाय्येन यदा प्रारब्धरूपोऽङ्कुरः समुत्पद्यते तदानीं काले जीवस्य कृते प्रारब्धभोगानुकूलं स्थूलशरीरम् यथोचिता शक्तिः, प्रारब्धानुकूला जातिः, आयुः, भोगः, अङ्कुरितसंस्कारानुकूलस्थूलशरीरस्य प्रकृतिः, सूक्ष्मशरीरस्य च प्रवृत्तिः समुद्भवति ॥ २२५ ॥

प्रसङ्गाद् भोगभेदा निरूप्यन्ते –

चतुर्विंशतिभेदा भोगस्य ॥२२६॥

भोगस्य चतुर्विंशतिभेदाः समाम्नाताः । यत्र क्रिया तत्र प्रतिक्रियाऽप्यवश्यम्भाविनी । यत्र च बीजं तत्रावसरे सति अङ्कुरोद्भवो निश्चितः । एवं हि प्रारब्धेन जनितो भोगोऽपि नूनमेव सम्भवः । भोगानामानन्त्येऽपि पूज्यचरणैः कर्मपारदर्शिभिर्महर्षिभिरनन्तभोगराशयश्चतुर्विंशतिधा विभक्ताः सन्ति । जीवो देहमनोबुद्धिद्वारा यत् कर्म करोति, तत् प्रतिक्रियास्वरूपेण संस्कारमुत्पादयति । तेषु संस्कारराशिषु ये संस्काराः प्रारब्धस्वरूपमासाद्य अङ्कुरोत्पत्तिं प्रकुर्वते, त

एव भोगानप्युत्पादयन्ति। इममातिगम्भीरकर्मप्रतिक्रियापद्धति विशिष्यावधारयितुं सुस्पष्टविवेचनस्यावश्यकत्वं प्रतिभाति स्वाभाविकास्वाभाविकरूपेण संस्कारस्य द्वैविध्यमिति पूर्वमेव प्रतिपादितम्, स्वाभाविकसंस्कारस्य गतिः क्रिया चैकप्रकारा, न तत्र प्रतिक्रियायाः काचिदपि संभावना। तदेतत् पूर्वपादे सम्यग् विवेचितम्। अस्वाभाविकसंस्कारस्य मूलं जैवी वासना। मानवयोनिमधिगतो जीवः पञ्चकोषपरिपूर्णतामधिगच्छन् नवीनवासनोत्पादिकां शक्तिं प्राप्नोति। वासनावैचित्र्यात् प्रतिक्रियायां अपि नितरां वैचित्र्यम्, तेन च फलोत्पत्तिविचित्रताऽपि नूनमवधेया। मानवं दैवं वा देहमधिगच्छन् जीवो यावद् वासनावशीभूतत्वान्मुक्तो न भवति, तावदसौ प्रतिक्षणं वासनां विधत्ते। शारीरिकस्य मानसिकस्य बौद्धिकस्य वा कर्मणोऽनुष्ठानकाले वासनाविजडित-चित्तत्वञ्चेतसि प्रोक्तकर्मबीजरूपं संस्कारं सञ्चिनोति एतदेवानन्त-जन्मजन्मान्मरीयानन्त-वैचित्र्यपूर्णकर्मवृक्षतः संगृहीतस्य बीजरूपिणः संस्कारराशेर्बीजसंग्रहगृहस्वरूपं सञ्चितं कर्म प्रोच्यते। बुद्धिभेदनिराकृतय एतदुच्यते यद् क्रियास्वरूपं संस्काररूपं वोभयविधमिदं कर्मस्वरूपमेव। उदाहृत्येदमवधेयं यत् ब्राह्मण कर्म, क्षत्रियकर्म, क्रियमाणं सञ्चितं वा कर्मेव कथ्यते। यथा किल शास्त्रे प्रकृत्यर्थमात्मार्थ चात्मशब्दप्रयोगस्तथैव कर्मशब्दप्रयोगो व्यापको वेद्यः। सर्वमेतदवधार्य कर्म-संस्कार-कर्मफलादिशब्दानां प्रयोगो हृदयङ्गमो विधेयः। क्रियाकर्त्तुर्हृदयवासनामनुसृत्य कर्मबीजस्वरूपसंस्कारस्य संग्रहो जायते। संस्काररूपं बीजं यथासमयमङ्कुरितं सत् वृक्षस्वरूपेण परिणमत् फलमुत्पादयति। इयमेव पूर्वक्रियायाः प्रतिक्रिया। फलं भुञ्जानो जीवो वासनाबलेनपुनः संस्कारस्वरूपं बीजं संगृह्णाति। अयमेव "बीजवृक्षन्यायस्य" अनाद्यनन्तः प्रवाहः। अयं प्रवाहः सर्वत्रैव स्थले कर्मशब्दवाच्यतामर्हति। शङ्कतेत्र जिज्ञासुर्यत् भोगकाले भोगस्य परिसमाप्त्या तत्कर्म हानिः कथं न? समाधत्ते—जीवः स्वपूर्वजन्मार्जितवासनासंस्कारबलेन क्रियायाः प्रतिक्रियामुत्पादयन् फलं भुङ्क्ते। परन्तु फलभोगकालेऽपि तदीयान्तःकरणस्य वासनाजालविजड़ितत्वात् फलभोगस्वरूपायाः प्रतिक्रियाया अवसानेऽपि नवीना वासना नूतनान् संस्कारान् संगृह्णाति, तया च नूतनवासनया समुत्पन्ना क्रिया पुनः प्रतिक्रियान्तरस्य कारणतां भजते। एष हि क्रियाप्रतिक्रियाक्रमोऽनन्तवैचित्र्यमयभोगशृङ्खलाया नियमितघूर्णायमानस्य गतागतचक्रस्य स्थायितां संरक्षति। क्रियावैचित्र्यानुरूपं प्रतिक्रियावैचित्र्यमिति हेतोर्भोगवैचित्र्यमपि स्वाभाविकमेव। तथापि पूज्यचरणैस्त्रिकालदर्शि-महर्षिभिर्भोगश्रेणयो निर्धारिताः। ताश्च श्रेण्यश्चतुर्विंशतिप्रकाराः, येषां दिग्दर्शनमपि क्रियते ॥२२६॥

इदानीं भोगविस्तृतिं वर्णयति—

सुखिदुःखिज्ञानिमूढविकलाङ्गतया मानवानाम् ॥२२७॥

सुखिदुःखिप्रभृतिभेदेन मानवानां पञ्चविधा भोगा निर्णीताः। प्रकृतेश्चतुर्विंशतिभेदानुसारं भोगा अपि दर्शनशास्त्रकारैः सर्वाधिकारिबोधाय चतुर्विंशतिधा विभक्ताः। यद्यपि कर्मवैचित्र्यमनुसृत्य भोगवैचित्र्यमप्यनन्तं स्वाभाविकम्, तथापि यथासम्भवं तदीयभेदानवबोधयितुं भोगानां चतुर्विंशतिश्रेणयो निर्धारिताः। तेषु मानवपिण्डश्रेणीनामनुसारतो मानवीया भोगा अपि पञ्चप्रकारा एव। सुखिनां मनुष्याणां भोगाः दुःखिनां चापि भोगाः, एतादृशमनुष्यभोगाः स्वर्गनरकसम्बन्धेनावधारयितुमुचितास्ते च स्वाभाविका एव। तृतीयो ज्ञानिनां भोगः। ज्ञानिनो मानवास्तु निजज्ञानद्वारा स्वीयं भोगं स्वल्पयन्ति। चतुर्थो मूढमानवानां भोगः। मूढमानवैर्निजभोगावगमो न कर्तुं पार्यते। पञ्चमो विकलाङ्गानां मनुष्याणां भोगः। प्रणष्टकर्मज्ञानेन्द्रियाणामतो विकलाङ्गमानवानां भोगेष्वनेकविधं वैचित्र्यं दृष्टिगोचरोभवति ॥२२७॥

अन्यच्चाभिधत्ते—

नित्यनैमित्तिकतिर्य्यक्तया देवानाम् ॥२२८॥

नित्यनैमित्तिकतिर्य्यक्स्वरूपत्वाद् देवानां भोगस्तु त्रिविधोऽवधेयः। ब्रह्माण्डस्य सर्वलोकभोग्येषु स्वर्गसुखभोगः सर्वतो वैचित्र्यपूर्णोऽपि तिसृभिः श्रेणिभिर्विभक्तः। स्वर्गीयदिक्पालादिपदधारिणां भोगः स्वर्गतानां स्वर्गीयं सुखं भुञ्जानानां जीवानां भोगः, स्वर्गस्य नानाविधभूतसंघानां भोगश्चेति स्वर्गीया इन्द्रादयो देवपदधारिण ऐशकर्मफलेन स्वर्गीयसमुन्नतपदे प्रतिष्ठितास्तत्रत्यं भोगं प्रकुर्वाणाः प्रायशोऽभ्युदयं प्राप्नुवन्ति। एष किल स्वर्गसुखस्यैकः प्रकारः। तद्वदेव शरीरपातानन्तरं कियते कालाय मृत्युलोकतः स्वर्गं गत्वा पुण्यात्मानो जीवाः स्वर्गसुखमनुभवन्ति, स च स्वर्गसुखस्य द्वितीयः प्रकारः स्वर्गीयाणां पारिजातादिवृक्षाणां पक्षिणां, नानासुखभोगिनां जीवानां च यो भोगः, स च स्वर्गसुखस्य तृतीयः प्रकारोऽवगन्तव्यः॥२२८॥

अन्यदप्यभिधीयते—

तद्वदेव नारकिणाम् ॥२२९॥

नरकनिवासिनामपि भोगस्त्रिप्रकारक एव। शरीरान्तस्यानन्तदुःखभोगस्थानं नरकलोक एव। पापकर्माचरतो जीवस्य नरकलोकप्राप्तिः। नरकलोकस्यापि रौरव-कुम्भपाकासिपत्रादयोऽनेके भेदाः सन्ति। तत्रत्यो भोगोऽपि त्रिधा विभक्तः। तत्रत्यं प्रबन्धमाचरतां नरकपदाधिकारिणामेकः, मृत्योरनन्तरं पापकर्मफलभोगाय ये मृत्युलोकान्नरकलोकं प्रतिपद्यन्ते, तेषां द्वितीयः, नरकस्थितकाकगृद्धश्रृगालादीनां तिर्यग्योनिजीवानां तृतीयः, एवं किल नरकस्थितानां भोगोऽपि त्रिप्रकारकः ॥२२९॥

अन्यदपि—

पिण्डत्रयानुसार्य्यवतारणाम् ॥२३०॥

अवताराः किल त्रिविधपिण्डमाश्रित्य सम्भवन्ति। रामकृष्णादयो मानवपिण्डधारिणः मत्स्यकूर्मादयः सहजपिण्डधारिणः नृसिंहहयग्रीवादयो देवपिण्डधारिणः। अवतारस्य भोगेषु वैशिष्ट्यमिदं यत् तस्य भोगसम्बन्धो ह्येकत्र देहधारिणा साकमन्यत्र यस्यावतारस्तेन सार्द्धमपि बोभवीति। अतोऽवताररभोगेषु वैचित्र्यमाततति। एतद्भोगवैचित्र्यमपि श्रेणीत्रयविभक्तम् ॥२३०॥

अन्यच्च—

तद्वदारूढपतितानाम् ॥२३१॥

आरूढपतितानां जीवानामपि भोगस्त्रिविध एव। दैवा आसुरा मानव्यश्च योनय आरूढपतिता भूत्वा सहजमानवदेवनामकं पिण्डत्रयमाश्रयन्ति। देवपिण्डस्याप्यनेक उच्चावचा विभागाः। तेषूच्चाधिकारता निम्नाधिकारे समागता आरूढपतिताः सम्भवितुमर्हन्ति। देवपिण्डधारिणां तिर्यग्योनावागमोऽपि सम्भवः। यमलार्जुनप्रभृतिदेवानां मृत्युलोके वृक्षयोनिलाभ एतस्योदाहरणमववेयम्। एवमारूढपतितानां देवानां जयविजयप्रभृतिमानवपिण्डप्राप्तिः पुराणशास्त्रेषु सुप्रसिद्धा, तथैव मृत्युलोके आरूढपतितमानवानामपि तिर्यग्योन्यधिगमप्रमाणानि पुराणेषु समुपलभ्यन्ते। भरतस्य मुनेर्मृगशरीरधारणम्। पिङ्गाख्य-विराध-सुपुत्र-सुमुखादिनामकानां मुनिपुत्राणामारूढपतितत्वात् पक्षिशरीरलाभः। सुतरामारूढपतितानां श्रेणीत्रयत्वात् तद्भोगा अपि त्रिधा विभक्ताः ॥२३१॥

अन्यदपि—

आतिवाहिको द्विधा स्वर्गनरकाभ्याम् ॥२३२॥

स्वर्गनरकसम्बन्धेन आतिवाहिकभोगोऽपि द्विप्रकारकः। एकस्माल्लोकान्तरं प्रस्थितेन जीवेन यद् भङ्गुरं शरीरम्,

वाप्यते, येन च पुण्यात्मा सुखं पापात्मा च दुःखमनुभवन्-लोकान्तरं प्रतिष्ठते, जीवगतिरियमातिवाहिकीत्युच्यते। अस्यामवस्थायां जीवेन यत् स्थूलं शरीरमासाद्यते, तदातिवाहिकमुदीर्यते, तत्त्वदर्शिभिर्मुनिभिरेतदवस्थाभोगो द्विधा विभक्तः। नरकगमनकालिको दुःखमयः, स्वर्गप्रस्थानसामयिकः सुखमयश्च। शङ्कते—मृत्युलोकशरीरेणैव सह येषां गतिः स्वर्गलोके जायते, यथा च धर्मराजयुधिष्ठिरार्जुनादीनां राजर्षिमहर्षीणां बभूव, तत्र किमवधेयम्? समाधत्ते एवमलौकिकशक्तिविशिष्टानां मृत्युलोकतो लोकान्तरगमनसमये दैवसाहाय्येन तदीयशरीरपरमाणुषु परिवर्त्तनत्वाद् विशिष्टावस्थाधिगमः। अयमप्यातिवाहिकगतेरेकः प्रकारो विज्ञेयः। स्वर्गलोकस्तैजसतत्त्वप्रधानो मृत्युलोकस्तु पार्थिवतत्त्वप्रधानः। तैजसतत्त्वलोकेषु पार्थिवतत्त्वप्रधानं शरीरं तदैव गन्तुमर्हति यदा तदीयदेहपरमाणुषु निश्चितं परिवर्तनं भवेत्। देवानां साहाय्येन नायमसम्भवः। दार्शनिकं विज्ञानमेतन्निश्चिनोति यदसाधारणदशायां देवसाहाय्येन स्थूलशरीरे तादृशः परिणामो जायते, येन पार्थिवस्थदेहधारी जीवो मृत्युलोकतो भूर्भुवर्लोकमतिक्रामन् स्वर्लोकमधितिष्ठति। अत्रत्यं स्थूलदेहं पार्थिवं सर्वथा परित्यज्य न लोकान्तरे तद्गतिः। अत एतदङ्गीकर्त्तव्यमेव यत् तद्गतिकाले देवतासहायतया तदीयस्थूलशरीरे तादृशः परिणामो भवति, येन जीवो लोकान्तरं गच्छेत्। परिणामोऽयं तदर्थमातिवाहिकदेहकृत्यं विधत्ते ॥२३२॥

अन्यच्च—

प्रेतानां द्विधा पदनिमित्ताभ्याम् ॥२३३॥

नित्यनैमित्तिकभेदेन प्रेतानामपि भोगो द्विविधः। प्रेतलोकनिवासिनां भोगो द्विधा विभक्तुं शक्यते। प्रेतलोकपदधारिणां वेतालादीनां भोगः, प्रेतलोकगामिनां जीवानां भोगः। प्रेतलोकस्य पदधारिणो वेतालादयः प्रेतलोकमुपस्थितानां नैमित्तिकप्रेतानां संरक्षणं कुर्वन्तो दण्डयन्तश्च तान् तदधिकारमनुसृत्य सञ्चालयन्ति। अतः प्रेतलोकगामिनां जीवानां साधारणभोगापेक्षया तेषां भोगो विशिष्टप्रकारोऽवधेयः ॥ २३३ ॥

अपरमपि—

भक्तज्ञानिनोरेकैकः ॥२३४॥

भक्तस्य ज्ञानिनश्च भोग एकैको विज्ञातव्यः। ब्रह्माण्डस्य भोगश्रेणिपर्यालोचनावसरे तदिदमभ्युगन्तव्यं यत् पञ्चमषष्ठसप्तमानां जनतपःसत्यलोकानां ब्रह्मस्वर्गापरनामकानां शास्त्रप्रतिपादितब्रह्मलोकानां बहुविधोपासनालोका ज्ञानलोकाश्चापि सालोक्यसामीप्यादिगतिमधिगतवतां भोग उपासनासम्बन्धीयभोगदृष्टान्तः, एतादृशमहात्मनां भोगोऽतीव विलक्षणः। ज्ञानिमहात्मनां भोगोऽप्यतीव विचित्रः। देवलोकस्य देवर्षिभोगोऽप्येतच्छ्रेण्यन्तर्गत एव। एवं किलोपासकभक्तानां ज्ञानिनां च भोगः पृथक् पृथगेकैको विज्ञेयः ॥ २३४ ॥

अन्यदप्युच्यते—

स्त्रीणामेक एव वैलक्षण्यात् ॥ २३५ ॥

विलक्षणस्य भावो वैलक्षण्यं तस्मात् स्त्रीणां भोगः एकप्रकारक एव। चतुर्विंशतिप्रकारभोगश्रेणीषु त्रयोविंशति संख्याकान् भोगप्रकारानुपवर्ण्य महर्षिणा सूत्रकारेण चतुर्विंशो भोगप्रकारो वर्ण्यते। स्त्रीणां भोग एकः स्वतन्त्रश्रेणिगः। इदं निर्णीतपूर्वं यत् सर्गेऽत्र स्त्रीधारा पुंधारा चेति पृथक् पृथग्धाराद्वयं प्रवहति। एकस्यामाकर्षणशक्तिरपरस्यां च

विकर्षणशक्तिर्विद्यते । एका क्षेत्ररूपा द्वितीया बीजस्वरूपा । अतोह्युभयोरेव भोगः स्वतन्त्रस्वरूप इत्यत्र नास्ति सन्देहः । कारणादस्मात् स्त्रीजातीयो भोगः स्वतन्त्रश्रेण्यन्तर्गत इति नूनमभ्युपगन्तव्यमेव ॥ २३५ ॥

प्रसङ्गादुच्यते—

अवान्तरभेदादनेकधा ॥ २३६ ॥

दार्शनिकविवेकमनुसृत्य भोगस्य पूर्वोक्तस्वरूपे चतुर्विंशतिप्रकारे सत्यपि आवान्तरभेदादसंख्यभेदा वेद्याः । तथाहि-स्त्री-संस्कारानुसारं स्त्रीभोगस्यैकत्वेऽपि त्रिलोकपवित्रकारिण्याः पतिव्रताया भोगः, मातुर्भोगः, पत्न्या भोगः; अपवित्राया वेश्याया भोगः इत्याद्यवान्तरभोगानामनेकश्रेणयो भवितुमर्हन्ति एवं हि देवपदधारिणां देशकालपात्रभेदेनामनेके भेदा भवितुमर्हन्ति । यथा च चतुर्विधभूतसङ्घचालकपदधारिणां विभिन्नपीठरक्षकदेवपदधारिणां दिक्पालदीनां च भोगेषु बहुविधत्वं व्यवधानं च सुतरां संभाव्यमेव । एवंप्रकारेणावान्तरभेदेन भोगानामगणितश्रेणयो भवितुमर्हन्ति ॥२३६॥

प्रसङ्गादुच्यते—

प्रारब्धमप्येवं भोगवैचित्र्यात् ॥ २३७ ॥

भोगवैचित्र्येण हेतुना प्रारब्धभोगस्याप्यनेके अवान्तरभेदा भवितुमर्हन्ति । इदं बहुत्र दृश्यते यत् प्रारब्धकर्मणा विशेषधनप्राप्तौ सत्यां केचित् पापे कतिचित् पुण्ये धनं व्ययीकुर्वन्ति बहवश्च सञ्चीय तद्धनं परेषां भोगाय संरक्षन्ति । यथेष्टं सदुपदेशदानेऽपि धनसञ्चयकारको धनिकवर्गस्तस्य धनस्य व्ययं नानुतिष्ठति । एवं किल विद्या-बल-विविधास्चैश्वर्यादिप्राप्तेरुदाहरणेनैतत्सूत्रविज्ञानमवधारयितुं योग्यम् ॥ २३८ ॥

तत्कथं सम्पद्यत इति व्याहरति—

सर्वेऽपि देहाभ्याम् ॥ २३८ ॥

कर्मविपकाकस्वरूपाः सर्वेऽपि भोगाः स्थूलं सूक्ष्मं च शरीरं द्वारीकृत्य सम्पद्यन्ते । प्रथमतः साधारण्येन स्थूलं चेत्युभयं शरीरं भोगसम्पन्नतासाधकम् । भोगसम्बन्धे स्थूलं शरीरमायोजकमन्तःकरणं चानुभावकमित्युक्तपूर्वम् । नियमोऽयं साधारणः । असाधारणभोगा अन्तःकरणद्वारैव सम्पद्यन्ते । अत एव शारीरिको रोगो व्याधिरान्तःकरणिकश्चाधिरित्युच्यते । तदिदमशुभभोगोदाहरणम् । शुभभोगस्योदाहरणे पूजाप्रसादो धर्मप्रसादश्च वेद्यः । इष्टदेवसम्मुखसमर्पितं मिष्ठान्नं शरीरद्वारैव प्राधान्येन शुभं भोगं प्रयच्छति, परन्तु धर्मसाधनादिपुण्यकर्मणां शान्तिसुखस्वरूपः सुखभोगोऽन्तःकरणे समुत्पद्यते । सर्वेषु लोकेषु शरीरद्वयसत्ताया इदमेव कारणम् । मृत्युलोके यथा पार्थिवं शरीरं सूक्ष्मशरीरेण सह तिष्ठति, तथैव लोकान्तरेषु तत्तल्लोकोपयोगि तत्तत्तत्त्वप्रधानमन्यविधं स्थूलशरीरं तिष्ठति ॥ २३८ ॥

इदानीं प्रसङ्गतो जन्मान्तरगतिनिर्णीयते—

सूक्ष्मस्य गतिरातिवाहिकी ॥ २३९ ॥

अतिवाहिकी गतिः सूक्ष्मशरीरस्यैव भोगनिष्पत्तेः स्थूलेन सूक्ष्मेण शरीरेण सम्पद्यमानत्वात् स्वत एवेयं शङ्का समुदेति यत् उभयशरीरयोः परस्परं घनिष्ठसम्बन्धत्वात् मृत्योरनन्तरं स्थूलं शरीरमिहैव पतितं तिष्ठति, तर्हि लोकान्तरप्राप्तिः कथमिति चेत् ? समाधत्ते-लोकान्तरगमनकाले केवलस्य सूक्ष्मशरीरस्यैवावश्यकत्वम् । यद्यपि स्थूलं शरीरं सर्वेष्वपि लोकेषु पुनः प्राप्यते, यदि चापि द्वाभ्यामेव शरीराभ्यां भोगनिष्पत्तिर्जायते, लोकान्तरप्राप्तिकाले स्थूलं शरीरमनावश्यकत्वाज्जीर्णवस्त्रवत् परित्यक्तं यत्र समुत्पन्नं तत्रैव पतितं तिष्ठति । सूक्ष्मं शरीरेणैव जीवो लोकान्तरं

प्रतिष्ठते । मृत्युकाले सूक्ष्मशरीरधारिणं जीवं यत्र संस्थाप्य लोकान्तरं प्रापयन्ति, तदातिवाहिकं शरीरमुच्यते तद्गतिरातिवाहिकी । यथा किलाच्छादनिकायां पत्रं पिधाय प्रेष्यते तथैवातिवाहिके देहे संस्थाप्य जीवं सूक्ष्मशरीरस्थं देवा लोकान्तरं गमयन्ति । अतिवाह्यत्वादेवातिवाहिकमुदीर्यते ॥ २३९ ॥

तद्गतिं स्पष्टयति —

सा पितृलोकादौ ॥ २४० ॥

सा आतिवाहिकी गतिः पितृलोकादौ बोभवीति । प्रेतनरकपितृदेवासुरलोकेषु आतिवाहिकी गतिर्जायते । मृत्युलोकेऽपि सा सम्भवति पुनरावृत्तिकारिणी, मरणान्तरं जीवो दुःख भोगाय प्रेत-नरकलोकयोः सुखभोगाय च पितृलोके भुवःस्वरादिदेवलोकेषु, किम्वाऽतलवितलादिष्वसुरलोकेषु च, अथवा मिश्रभोगाय कर्म कर्त्तुं मृत्युलोकेऽत्र समागच्छन्ति । आतिवाहिकदेहसाहाय्येनैवैता गतयो भवन्ति । सूत्रेऽत्र पितृशब्दोपादनप्रधानकारणमेतदेव यत् मृत्युलोकस्य साधारणसुखप्रदः पितृलोक एव, प्रेतनरकपितृलोक-आतिवाहिकी कस्य प्रबन्धेन भवतीत्युच्यते—

देवाधीना ॥ २४१ ॥

अतिवाहिकी गतिर्देवाधीना वेद्या । अत्र देवाः साहाय्यमाचरन्ति । प्रेतलोकं नरकलोकंवा प्रापयितुं यमदूतसंज्ञकाः क्षुद्रदेवाः सहायकाः । अन्यत्र गतौ देवदूतनामकाः सहायतां विदधते । लोकान्तरप्राप्तिकाले सूक्ष्मशरीरविशिष्टजीवानामतिदुर्वलत्वात्पराधीनत्वाच्च ते परसाहाय्यमन्तरेण नान्यत्र गन्तुं प्रभवः । तदानीमुपर्युक्तदेवाः पत्राधान्यां पत्रमिवाऽऽतिवाहिकेषु देहेषु जीवान् संस्थाप्य लोकान्तरमानयन्ति, मृत्युलोके स्थूलशरीरं त्यक्त्वा, मृत्युलोक एव जीवानां जन्मकालेऽपि एवमेव दैवसाहाय्यमपेक्षितम् ॥ २४१ ॥

प्रसङ्गतो मानवानां जन्मविषयकं विज्ञानमुपवर्ण्यते—

पितृतन्त्रमाधिभौतिकम् ॥ २४२ ॥

आधिभौतिकं पितृणामधीनं ज्ञातव्यम् । देवगणा यद्यातिवाहिके शरीरे सन्निधाय सूक्ष्मशरीरविशिष्टजीवं लोकान्तरं प्रापयन्ति, मृतिभुवनेऽपि मातृगर्भंतुधिगमयन्ति चेत्तर्हि मृत्युलोकस्य स्थूलशरीरं केन निर्मीयत इत्यादिजिज्ञासुसंशयनिराकृतये पूज्यपादमहर्षिसूत्रकृतासूत्रमिदमाविस्वृत्तम् पितृवीर्यं द्वारीकृत्य देवगणाः सूक्ष्मशरीरधारिणं जीवं मातृगर्भमानयन्तीति निश्चितमेव । जीवस्य स्थूलशरीरं मातृगर्भे मातुः पितुश्च रजोवीर्यद्वारा पितृभिरेव निर्मीयते । अर्यमादयो ह्यनेके नित्यपितृपदापदाधिष्ठातारः पितृलोकवासिनो देवविशेषाः, ये किल जगत आधिभौतिकप्रबन्धनिरीक्षकाः एतेषां द्वारैव मातृगर्भे जीवस्य यथोचितभोगनिष्पत्तये उपयुक्तं स्थूलशरीरं निमित्तं जायते । सुतरां मानवस्थूलशरीरनिर्माणं पितृद्वारा सम्पद्यते सूक्ष्मदेहधारिणं जीवं च यथाकालं तद्देहे देवगणा नयन्ति । तदानीं जीवोऽसौ शरीरत्रयविशिष्टो भूत्वा नूतनकर्मानुष्ठाय प्राचीनकर्मफलोपभोगाय चोपयोगितां प्रपद्यते एतदेव मानवजन्मग्रहणरहस्यम् ॥ २४२ ॥

[ क्रमशः ]

# सूर्योदयस्य

५५ तमसंवत्सरप्रवेशोत्कर्षाशेषसमुल्लासोपलक्ष्ये १६७८ खीस्ताब्दस्यागस्तमासे

## स्वातन्त्र्योत्तरसंस्कृतप्रगतिविशेषाङ्कः

### परमैश्वर्योत्सवतया

### संस्कृत-विश्व-वाङ्मय-विषयसामरस्यसंज्ञापकतया सप्रश्रयं प्रकाशयिष्यते

अस्मिन् विविधनिबन्ध — निकुरम्बरमणीये कविताकमनीये
एकाङ्किकृत्यङ्किते स्वाध्यायसामग्रीसंगते ऐतिहासिके

### स्वातंत्र्योत्तरसंस्कृतप्रगतिविशेषाङ्के

वर्षेऽस्मिन् भारतेऽन्यत्र विदेशेषु यथा च सा।
एकत्रिंशच्छरच्छुभ्रा प्रगतिः ज्ञापयिष्यते ॥

महनीया मनीषिणः, प्रज्ञाप्रकाशपरमैश्वर्योल्लासिता विद्वांसः, कलाकृतिकलापकलितकलहंसाः कवयः, ललितालोकालोकलावण्यलालसाः कृपालवः लेखकाः, ऐतिहासिकं तथ्यं दिदर्शयिषवः शिक्षाकोविदाः, तत्त्वानुसन्धित्सूनां शिरोमणयः सश्रद्धं समाहूयन्ते श्रीमन्तः सूर्योदयोदयाय संस्कृतसुभगरश्मिप्रसरप्रकाशप्रसारायेति प्रार्थना। तत्र विषयाः— स्वातंत्र्योत्तरसंस्कृतविकासः, स्वा० गद्यकाव्यम्, चम्पूकाव्यम्, मुक्तकानि, स्तोत्राणि, खण्डकाव्यानि, महाकाव्यानि, निबन्धाः लक्षणलक्ष्यग्रन्थाः, कोशेतिहासग्रन्थाः नास्तिकास्तिकदर्शनदर्शकग्रन्थाः तन्त्रग्रन्थाः, गणितफलितज्यौतिषग्रन्थाः व्याकरणप्रक्रियादर्शनविषयकाःग्रन्थाः पुराणेतिहासप्रकाशनानि, शासननीतिः अपरभाषास्य: संस्कृतेऽनूदितविषयाश्च तथान्ये लेखकैरूह्या विषयाः भविष्यन्ति।

संस्कृतसेविसंस्थानां संस्कृतसेवार्थं जीवनसमर्पकानां निःस्वार्थकार्य-सम्पादकानां सर्वातिशायिनां विदुषां परिचयः दैनिक-साप्ताहिकपाक्षिक-मासिक-त्रैमासिक-षाण्मासिकवार्षिकपत्राणां परिचयः इत्येतेषुसन्दर्भविभ्राजितेषु विषयेषु लेखान् संप्रेष्य सूर्योदयसम्पादकोऽनुग्राह्यः श्रीमद्भिरिति शम्।

पञ्जीकृत-संख्या—एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

**पत्र-संहिता—**

१. 'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश—(मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३/०० पृथक् प्रदेयानिः स्युः।

२. आवर्ष गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-प्रथमाङ्कतः (जनवरीअङ्कतः) एव ग्राहकत्व स्वीक्रियते। माध्यमिकेन केनापि अङ्केन न स्वीक्रियेत।

३. आंग्लमासस्य २६ तमे दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषया संयनया, सरलया, शुद्धया च भाव्यम्। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैक-पृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-(टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्त।

५. सम्पादकीय-विषयसम्वद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् येन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापनशुल्कम्—**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्र,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी कैण्ट।
मुद्रण-स्थल—जयभारत प्रेस, बाँसफाटक, वाराणसी।

